॥ श्रीः ॥

हरिदास-संस्कृत-ग्रन्थमाला



२०२

॥ श्रीः ॥

'ज्ञानश्री' परीक्षापाठ्यनिर्धारितं

# दूताङ्गदं

[illegible] नाम

# छायानाटकम्



टीकाकारः

—अनन्तरामशास्त्रिवेतालः

॥ श्रीः ॥

हरिदास-संस्कृत-ग्रन्थमाला

२०२

महाकविश्रीसुभटप्रणीतं

# दूताङ्गदं

नाम

## छायानाटकम् ।

तदिदं

वाराणसेयोदयप्रतापक्षत्रियमहाविद्यालये संस्कृतहिन्दी-विषयाध्यापकेन

साहित्याचार्य-श्रीमदनन्तरामशास्त्रिवेतालेन

दूताङ्गदचन्द्रिकानामकेन

स्वोपज्ञ-संस्कृतहिन्दी-व्याख्याद्वयेन

भूमिकादिविषयैश्च सम्भूष्य

सम्पादितम् ।

प्रकाशकः

जयकृष्णदास-हरिदास-गुप्तः,

चौखम्बा संस्कृत सीरिज आफिस,

विद्याविलास प्रेस, बनारस।

वि० सं० २००७ ]

[ सन् १९५०

॥ श्रीः ॥




बहुमानं भजमाना सद्गुरुचरणारविन्दमकरन्दम् ।
सच्छात्रभ्रमराली रसवित् सुमनोमुदेऽस्तु सा काचित् ॥

"शिष्येणाऽर्पयितव्यं गुरवे तदनुग्रहैकफलरूपम् ।
आयं स्वकीयकार्यं" तदिदं गुरुदैवताऽर्पितं भवतु ॥ २ ॥

विबुधाऽऽन्ध्र'भालचन्द्र'श्रीकचरणाम्भोजयोर्भक्त्या ।
अर्पितमन्तेवसता 'वेतालाऽनन्तरामेण' ॥ ३ ॥

संस्कृतहिन्दीभाषाग्रथितव्याख्याढ्याऽङ्कितञ्चैतत् ।
रञ्जयदनन्तचेतो 'दूताङ्गद'नाटकं चिरञ्जयतु ॥ ४ ॥



॥ श्रीः ॥

# ❀ भूमिका ❀

श्रीमत्परमेश्वरानुग्रहादथेदं 'दूताङ्गदं' नाम छायानाटकं 'सुभट'कविकल्पित निजनिर्मितनूतनसंस्कृतहिन्दीव्याख्याद्वयसम्भूषितं प्रकाशयितुमुपक्रम्यते। अद्ययाव'न्निर्णयसागर'मुद्रणालयप्रकाशितमेकमेव मूलमात्रमेतन्नाटकसंस्करणं समुपलब्धम्। परमत्र सङ्गृहीतेषु पाठेषु बहुत्र विशिष्टा अशुद्धयोऽद्यापि चतुर्थेऽपि संस्करणे दृष्टिपथमायान्तीति तत्सम्पादनविषये किन्नाम वक्तव्यम्? तत्र किल दृश्यमाना विद्वन्मनसोऽपि भ्रामकास्ते तेऽपपाठाः समुचितं कविमानसभावानुरूपं किमपि विशुद्धं परिवर्तनमन्तरेण सुमेधसामपि सुदुष्करार्थावबोधाः सन्तीति प्रस्तुतेऽस्मिन्संस्करणे यथामति तत्संशोधनपूर्वकं विशुद्धोचितपाठप्रकल्पनाय बाढं प्रयतितम्।

'प्रौढगूढार्थाऽतिगम्भीरभावा च 'सुभट'महाकवेः कृतिरियं न तावत्सर्वैः सम्यगवगन्तुं शक्ये'ति व्याख्यानिर्माणमत्राऽतिमात्रमावश्यकम्, तत्रापि 'काशिकराजकीयसंस्कृतपाठशालीयपरीक्षासु केवलं स्त्रीवर्गकृते कल्पितायाः 'ज्ञानश्री'परीक्षायाः प्रथमखण्डे पाठ्यरूपेण नाटकमिदं सन्निवेशितमस्ती'त्यबोधविद्यार्थिजनोपकाराय संस्कृतहिन्दीव्याख्याद्वयेन समं विशुद्धमेतन्नाटकसंस्करणमतीवोपयुक्तम्—इत्येतदालोच्य 'विद्याविलास'मुद्रणालयाधिपतिना श्रेष्ठिश्री'जयकृष्णदासगुप्त'महोदयेन प्रकृतनाटकीयसंस्कृतहिन्दीव्याख्याद्वयनिर्माणकर्मणि प्रेरितैश्चिरलिथात्समयादेतत्कार्यसम्पादनप्रवृत्तैः कारणविशेषाद्द्व्यैकवत्सरानन्तरमेतस्य नाटकस्येदं सटीकं संस्करणमस्माभिः प्रकाशयितुं पारितमित्येष साम्प्रतं परतरप्रमोदस्य विषयः।

प्रस्तुतैतत्पुस्तकप्रकाशनात्पूर्वमेव हिन्दीभाषानुवादोऽस्य नाटकस्यैकः प्रकाशितः कुतोऽप्यधिगतोऽभूत्। दर्शनोत्तरमिदं प्रकाशनं किमप्यपूर्वमस्मन्मनसि बलात्कौतूहलमुत्थापयाम्बभूव। तद्विषयविवक्षायामपि सत्यां किमपि वक्तुमिदानीं तत्र नोत्सहते चेतः। 'विधेयस्तदनुवादकोऽस्मदीय एवे'ति तद्रचनागुणागुणवर्णनमस्मत्कृतमपि प्रेक्षकाणां मनसि तद्विषयमस्मदीयं पक्षपातमथवा किमपि भावान्तरमुद्भावयद्बहुधा सहृदयहृदयेभ्यो न जातु रोचिष्यत इत्यस्माकमौदासीन्यमेवात्र न्याय्यम्। निष्पक्षाः प्रेक्षावन्तो रहस्यं तदीयमवगच्छेयुरेव। सर्वथा प्रेक्षणीयोऽयं तैर्विचारणीयश्चेति साग्रहोऽस्माकमनुरोधः।

दैवात्कतिपयप्राज्ञवरैः प्रशंसितोऽयं महत्त्वमेव स्वीयमुद्घोषयत्यनुवादः। ग्रन्थेऽस्मिन् दूषितपाठेषु तत्र तत्रार्थविचारप्रसङ्गे च परिश्रान्तोऽयं मनस्वी किमपि कुतोऽपि रहस्यार्थजातमादायैव नूनं कृतार्थः स्यादित्येतत्सर्वं तन्मनःसाक्षिकमेव स्वानुभवसंवेद्यम्। एतस्यायं विलक्षणः परिश्रमो विचक्षणैः सर्वात्मनाप्रशसनीय एव। किं बहुना—

प्राज्ञप्रशंसितात्मा प्राज्ञकृतोऽनन्तविस्मयाऽऽधायी।
भाषानुवाद एष प्राज्ञजनानन्ददश्चिरं जयतु॥
प्रतिपदविचारणीयोयोग्यतमत्वं प्रदर्शयन् कर्तुः।
सोऽयं विलक्षणार्थो—गुणपूर्णो—दर्शनीयतां धत्ते॥

अस्तु तावत्, सम्प्रति प्रकृतग्रन्थकारविषयकं किञ्चिदालोच्यते। 'महाराजाधिराजश्री'त्रिभुवनपाल'देवसभादेशेन श्रीम'त्कुमारपालदेव'यात्रायामभिनेतुं नाटकमिदं 'सुभट'कवी रचयाम्बभूवे'त्यर्थकं ग्रन्थोपक्रमे सूत्रधारवचनं समुपलभ्यते। अत्र—'त्रिभुवनपालदेवो' महाराजाधिराजः 'कुमारपालदेव'श्च तत्सुतो युवराजोऽन्यः कोऽपि तन्निकटसम्बन्धी माण्डलिको वासी'दित्येकः पक्षः, 'कुमारपालदेवः' कोऽपि 'त्रिभुवनपालदेवा'त्पूर्ववर्ती भूपतिरासी'दिति च द्वितीय-इत्येवं पक्षद्वयमुपस्थापयितुं शक्यते। यात्रोत्सवश्च कस्यापि सद्भावे प्रत्यक्षरूपेणाऽसद्भावे च तत्पश्चात् चित्रादिरूपेणेत्युभयथाप्युपकल्प्यते।

तत्र प्रथमे पक्षे—त्रयाणां समकालिकत्वात्पूर्वोक्तभूपतिद्वयस्य समये 'सुभट'स्य सत्ता सिध्यति। 'त्रिभुवनपाल'शासनकालश्च कुत्रापि नोपलब्धोऽस्माभिरिति 'कुमारपाल'समयेनैव 'सुभट'समयः साधनीयोऽधुना। 'कुमारपाल'भूपतिस्तावत् १०८८ वत्सरात् ११७२ वत्सरं यावज्जीवनकालं वहतो'ऽनेकार्थसङ्ग्रहा'द्यनेकग्रन्थकर्तुः श्वेताम्बरजैनस्य पण्डितप्रवरश्री'हेमचन्द्राचार्य'स्य छात्रो गृहीतजैनदीक्षः ११४३ वत्सरात् ११७३ वत्सरं यावद् 'अनहिलवाड ( पट्टन )' राजधान्यां गुर्जरदेशे शासनमकरोत्। एतेन—द्वादशशताब्दीमध्यकाले 'सुभट'स्य सत्ता सिध्यति।

द्वितीये च पक्षे—'कुमारपाल'भूपतेरनन्तरं 'त्रिभुवनपालदेव'स्य समये सिद्धे 'सुभट'कवेरपि समयस्तत्रैव साधनीयः। परमत्र 'त्रिभुवनपाल'समयाऽनुपलब्ध्या प्रकारान्तरेण 'सुभट'कालः उन्नीयते। ११७९ वत्सरात् १२६२ वत्सरं यावत् 'सोमेश्वरदेवो' नाम कविरासीत्पृथिव्याम्। 'कुमारपाल'भूपालादनन्तरं पुरुषद्वयी पञ्चषवर्षात्मकमत्यल्पकालं राज्यशासनमकरोत्। तदनु च 'भीमदेव-वीसलदेव' राजद्वयस्य समये राज्यपुरोहितो भवन् सोऽयं 'सोमेश्वरः' स्वोपज्ञ'कीर्तिकौमुद्यां' चालुक्यवंशेन सह 'सुभट'कविं वर्णयति स्म*। एतेन किल—द्वादशशताब्दीमध्यकालादनन्तरं त्रयोदशशताब्दीप्रथमपादं यावत् 'सुभट'स्य सत्ता प्रतिपादिता भवति। किञ्च—'सुभट'-समये स्थितवतापि 'सोमेश्वरेण 'सुभट'जीवनसमाप्तेरनन्तरमेव 'कीर्तिकौमुदी' प्रणीते'ति 'सुभट'वर्णनपरे पद्ये'ऽधुनापी'ति पदेन व्यज्यते।

पक्षद्वयमपीदं द्वादशशताब्दीमध्यकालादारभ्य त्रयोदशशताब्दीप्रथमपादं यावत् 'सुभट'कवेः सद्भावं साधयति।

अत्र किञ्चिद्विवेचनीयम्—एकस्य राज्ञः सभायां तदाज्ञया प्रवर्तितो द्वितीयस्य यात्रोत्सवप्रसङ्गोऽत्र नरपती द्वावप्यमू नियतं केनापि सम्बन्धेन परस्परं समन्वितौ बोधयति। तत्रापि 'पालदेव' इति सङ्केतसाम्यं 'त्रिभुवनपाल-कुमारपालौ' समानकुलजौ सूचयति। अत्रानयोर्भूपालयोर्मध्ये 'कस्तावत् पूर्ववर्ती भूपाल ?' इति निर्णयस्तु 'त्रिभुवनपाल'समयाऽनुपलम्भाद्दुष्करः। परमनयोः कस्यापि वंशाविपर्ययः

---

* दृश्यतां 'निर्णयसागर'मुद्रितैतन्नाटकस्य प्रथमे पृष्ठे टिप्पण्यां पद्यमिदम्—
'सुभटेन पदन्यासः स कोऽपि समितौ कृतः। येनाऽधुनापि धीराणां रोमाञ्चो नापचीयते'॥

कदापि समभूद्, तदानीं नामसङ्केतः पुनस्तथैव तस्थाविति च स्फुटं दृश्यते।

'कुमारपाल'भूपश्च स्वपूर्ववर्तिनो 'जयसिंह'भूपस्य भ्रातृव्यश्चालुक्यवंशीयं राज्यं पञ्चाशद्वर्षदेशीयावस्थायां पितृव्यात्प्राप्तवान्। पितृराज्यं तेन न प्राप्तमासीत्। ९६१ वत्सरात् १२४२ वत्सरं यावद् 'अनहिलवाड'नामिकायां गुर्जरराजधान्यां चालुक्यवंशीयानां नृपाणां शासनमासीत्। तद्राजपरम्परायां पुनः क्वापि गणना 'त्रिभुवनपाल'स्य नास्तीति स्फुटं कोऽप्यन्यवंशीय एवासौ धराधरीश्वरः। 'कुत्रस्योऽयं कुत्र काले कुले चासी'दिति नैतिहासिकैः किमपि स्फुटीकृतं दृष्टम्। 'एष 'मयूरशतक'-टीकां प्राणैषी'दित्येव केवलमुल्लिखितं लब्धमस्माभिः*।

अन्यच्च—'सुभट'कवे'स्त्रिभुवनपालदेव'समाश्रयणं तावद् तद्वारस्था प्रस्तुतनाटकनिर्माणकर्तृत्वेन प्रसिद्धम्। 'त्रिभुवनपालदेव'स्य गुर्जरदेशशासनं स्वप्रसिद्धम्। अतश्च—'गुर्जरदेशाधिपतेः 'श्रीकुमारपालदेव'स्याश्रयणं कुर्वाणः 'सुभटो' गुर्जरजातीय' एवेति केषाञ्चिन्मतं प्रमाणाभावादुपेक्षणीयम्। गुर्जरदेशाधीशाश्रयणेऽपि कवेर्गुर्जरजातीयत्वं न वक्तुं शक्यम्, अन्यजातीयेनापि तथा कर्तुं शक्यत्वात्।

किञ्च—कदाचन 'कुमारपाल'भूपतेः सभायां 'जैनाः प्रत्यक्षमपि सूर्यं नाभ्युपयन्ती'ति केनाप्युक्ते 'हेमचन्द्राचार्येण' जैनानां सूर्योपासकत्वं दृढतया समर्थितं प्रसङ्गान्तरेऽपि तेषां शिवभक्तिः स्तुतिरूपेण प्रतिपादिता†। अनेन—'तत्समयाज्जैनानां सूर्योपासना बलवद्रूपमासादितवती'त्यनुमीयते। पूर्वोक्तेनेतिवृत्तेन 'मयूरशतक'टीकानिर्मातृत्वेन च-सूर्योपासकत्वमात्मनीनं दृढयत'स्त्रिभुवनपाल'स्य जैनत्वं 'कुमारपाले'-न सह नातिदूरसम्बन्धित्वं समकालिकत्वं चेति सुदृढं सम्भाव्यते। सकलार्थसारभूतं त्विदमेवान्तेऽवगम्यते, यत्किल—पूर्वोक्तपक्षद्वये प्रथमः पक्ष एव प्रायः समधिक सहृदयेभ्यो रोचते द्वितीयस्तु नाधिकम्।

इत्थं प्रकृतग्रन्थकारस्य 'सुभट'कवेर्विषये समयस्यैवात्र विचारो यथामति कृतो नान्यत्किमपि जात्यादिकं परिचाययितुं पारितं यथोचितप्रमाणाभावात्।

इदानीं प्रकृतग्रन्थविषयकं किमपि प्रस्तूयते। ग्रन्थोऽयं स्वल्पकायः कवेः प्रौढपाण्डित्यस्य परिचायकः। अङ्गदरावणसंवादरूपो रामायणीयः प्रसिद्धः कथाभागोऽस्य प्रतिपाद्यो विषयः। 'सुभट'कृते क्लिष्टतमेऽस्मिन् ग्रन्थे तत्र तत्र ते ते रसा अपि प्रवहन्तो दृश्यन्ते। कुत्रचिद्विचित्राः पदप्रयोगाश्चोपलभ्यन्ते। 'स्वकीयपद्यैः सम कविनाऽन्येषामपि 'भवभूति–राजशेखरा' दीनां कवीनां पद्यानीह 'सङ्गृहीतानी'ति ग्रन्थान्तिमपद्यादवगम्यते।

---

* सर्वमिदमन्यदप्युपरिष्टादुट्टङ्कितं समयेतिवृत्तादिकं, 'संस्कृत साहित्य का संक्षिप्त इतिहास' इत्याख्यं '१९३२' मितेशवीयवर्षे काश्यां 'भारतजीवन'मुद्रणालये मुद्रितं द्वितीयभागात्मकं निबन्धमाश्रित्य प्रपञ्चितमस्माभिः। सर्वत्र पूर्वं प्रतिपादिता वत्सराः शताब्दश्च विज्ञेया ईशवीयाः।

† दृश्यतामेतत् '१९२१' मितेशवीयवत्सरे 'विद्याविलास'मुद्रणालयतः प्रकाशितस्या'ऽनेकार्थसङ्ग्रहकोश'स्य 'हेमचन्द्राचार्य'रचितस्य भूमिकायाम्।

दृश्यकाव्यभेदमिदं नाटकं राजसभायामभिनयनार्थं 'सुभट'ः प्रणीतवान् । नाटकं तावत्—प्रदर्शनीयचरितानुकरणीयपात्राणां तत्तदवस्थोचितकार्यानुकरणस्वरूपो वाचिकाद्यभिनयविशेष एव । 'नाटकं ख्यातवृत्तं स्या'दित्युक्तलक्षणैर्यथासम्भवं लक्षितेऽस्मिन्नाटके श्रीरामचन्द्रो नाम धीरोदात्तः प्रसिद्धचरितः समुचित एव नायको ऽवलम्बितः । पञ्चाधिकेष्वङ्केषु नाटकेऽपेक्षितेष्वपि नाटकमिदमङ्कानां विभागैर्विरहितमेकाङ्कस्वरूपमेव प्रणीतं छायानाटकनाम्ना च प्रख्यापितं कविना ।

छायानाटकस्वरूपं च किमपि कुत्रापि न प्रपञ्चितम् । श्रूयते, प्राचीनकाले यव- ( जावा )द्वीपे नाटकानीदृशान्यभिनीयन्ते स्म । तत्र किल रङ्गस्थले पात्राणां प्रवेशमप्रदर्श्य नेपथ्याभ्यन्तर एव जवनिकासमीपेऽवस्थितानां तेषां वाचिकाद्यभिनयविशेषाः प्रकल्प्यमाना अन्तःस्थप्रदीपप्रकाशप्रभावेण बहिः पटोपरि प्रतिबिम्बिताः सन्तः सामाजिकानां पुरः स्पष्टरूपेणोपस्थाप्यन्ते । तदानीं परस्परसंवादसङ्गीतवाद्यादिध्वनयोऽपि नेपथ्यसमुद्भूताः सामाजिकैः श्रूयन्ते । छायात्मना पटे प्रतिबिम्बितश्चित्ररूपोऽभिनय एव च्छायानाटकस्य स्वरूपं व्यपदिश्यते । एष एव प्रकारः साम्प्रतं 'चलता बोलता सिनेमा' इति नाम्ना तत्र तत्र लोके प्रदर्शितो भवति ।

सत्यपीत्थं छायानाटकस्वरूपे, नाटकेऽस्मिंस्तत्र तत्र पात्रप्रवेशनेपथ्योक्तिपटाक्षेपपूर्वकप्रवेशाः प्रकल्पिताः सन्त आपाततश्छायात्मकाभिनयविरुद्धाः प्रतीयन्ते, परन्तेऽपि जवनिकाभ्यन्तर एव सम्पादिता वेदितव्याः ।

ईदृशान्येकाङ्कानि च्छायानाटकानि प्रायो न सन्त्येव संस्कृतसाहित्ये । पुरातनसमयादुपेक्षितोऽयं विषयः संस्कृतविदुषां मनोयोगमाश्रयन्निदानीं पुनः 'सुभट'कविप्रदर्शितदिशा प्रादुर्भूयादित्याशास्ते सहृदयसमाजः ।

इत्थमयं विचारणीयः सर्वोऽपि विषयः समाप्तिं नीतः । किमपि नैवात्र वक्तव्यमवशिष्टं दृश्यते । केवलमेतद्ग्रन्थप्रकाशनकर्मणि ये ये रसिकसज्जना यं कमप्यतिसंमदमनिर्वचनीयं व्यवहारं मया सह समयेऽस्मिन्नाविर्भावयाम्बभूवुस्तदीयस्मरणेन प्रसीदत्यन्तरात्मेति तत्तेषां चरितमुदारं सादरमभिनन्द्यते । ईदृशमेव सदा सहयोगं ददानाः परममित्रभावं दधानास्तेऽनन्तप्रशंसिताः सन्तु । बहुमूल्यमात्मनः समयं व्ययीकृत्य प्रस्तुतैतदस्मदीयकार्यपर्यालोचनसत्परामर्शप्रदानरूपसहयोगप्रदर्शनद्वारेणोपकृतवन्तः सफलतां नीतवन्तोऽस्मत्परिश्रमं परमोदारप्रकृतयस्ते सर्वतः प्रशंसनीयाः सहृदयाः । तत्र केवलमीदृशीं कृतज्ञतामेव प्रकाशयितुं प्रभूयते । एतेनैव चेतःसन्तोषं ते जुषन्ताम् ।

यन्मूलमिदमनन्तविज्ञानं, तदुदारपूज्यवरश्रीदमद्गुरुचरणसमर्पितं नियतमेतत्साफल्यसम्पूर्तिपदं प्रयास्यतीति तत्प्रथमं भूमिकाविषयविवरणाद्युचितविषयोपस्कृतं चेदं प्रस्तुतं संस्करणमेवं प्रकाश्य तत्प्रेक्षणाय प्रार्थ्यन्ते समं हृदयेन सहृदयाः ।

श्रीमत्परमेश्वरचरणस्मरणं सप्रणामादरं चरमे विरचय्य श्रीपराम्बानुग्रहावलम्बबलोपक्रान्तैतत्सकलकार्योपसंहारपुरःसरं च साम्प्रतं चरमवर्णध्वंसं प्राप्यते प्रकृतेयं भूमिकेति शिवम् ।

काशी, वैशाखी पूर्णिमा, वै० सं० २००७। } अनन्तरामशास्त्री वेतालः ।

॥ श्रीः ॥

# दूताङ्गदनाटकप्रतिपाद्यानां विषयाणां विवरणम् ।

कविरत्र पूर्वं नाटकीयनियमानुसारं नान्दीपाठं विधाय सूत्रधारवचनेन दूताङ्गद-नाटकाभिनयनप्रस्तावमुपस्थापयन् प्रस्तावनास्वरूपेण तदनुरूपपात्रप्रवेशसूचनां करोति तदनुसारमेव च श्रीरामचन्द्रादिपात्राणां प्रवेशो भवति ।

तत्र समुद्रं तीर्त्वा सुवेलपर्वते विश्राम्यता श्रीरामचन्द्रेण लक्ष्मणकृतप्रस्तावानु-सारं प्रशंसित आदिष्टश्च भूत्वाङ्गदो रावणं प्रति रामस्य 'सीतां प्रत्यर्पय, नोचेल्लक्ष्मण-बाणैः ( विचित्रमिदम् ) सपरिवारो घातयिष्यस' इत्येवं सन्देशमादाय दूतरूपेण लङ्कायामुपस्थितो भवति । अङ्गदस्योपस्थितिं निशम्य वार्तालापप्रसङ्गे विभीषणेन मन्दोदर्या माल्यवता च सम्बोधितो भवन्नपि रावणः सीतां प्रत्यर्पयितुं नेच्छति, तत्रैव रावणविभीषणयोः परस्परं सम्बन्धविच्छेदो भवति ।

एतदनन्तरं प्रहस्तनामा द्वारपाल आगत्य तत्राङ्गदोपस्थितिं सूचयित्वाङ्गदमादेशा-नुसारं रावणस्यान्तिकमुपस्थापयति । तदानीं श्रीरामचन्द्रसन्देशोऽङ्गदद्वारा व्यक्तो भूत्वा द्वावपि रामरावणावुत्तरप्रत्युत्तरात्मकेषु परस्परसम्भाषणेषु प्रवर्तयति, तत्र चा-ऽङ्गदमुखेन रामचन्द्रस्थिती रावणस्य विदिता भवति ।

ततः पुनरादेशं प्राप्य रावणस्य समीपं प्रहस्तः कृत्रिमां सीतां प्रवेशयति । तत्र तत्सीतायाः प्रणयपूर्वकं रावणाङ्कारोहणमयोध्यां प्रति गन्तुमङ्गदस्य सम्बोधनादिकं च प्रदर्शिते भवतः । एतेनाङ्गदस्य पूर्वं तस्याः सीतायाः सत्यतासंशयः, पुनः सहसो-पस्थिताया एकस्या राक्षस्या मुखेन 'रामस्य किमप्यनिष्टं श्रुत्वा लतापाशेन सीता प्राणत्यागं कर्तुमिच्छतीति वृत्तान्तोपलब्धौ च तस्याः कृत्रिमतानिश्चयो भवति । अस्मिन्नवसरे राक्षसेभ्यः सीतासंरक्षणादेशं दत्त्वा रावणस्ततस्तां कृत्रिमां सीतां निव-र्तयति । ( अत्रैष विलक्षणः प्रसङ्गः कविना मानसिककल्पनाधारेण प्रदर्शितः । )

पुनः परस्परसंवादद्वारेण रावणः स्वकीयामङ्गदश्च श्रीरामचन्द्रस्यानुपमां वीरतां वर्णयतः । अत्र प्रसङ्गे रावणः कुपितो भवन्नङ्गदं हननभयं प्रदर्श्य स्वसांमुख्यादपसर्तुं कथयति । अङ्गदोऽपि 'सीतां प्रत्यर्पय, नो चेद्रामेण हनिष्यस' इत्येवमन्तिमं श्राव-यित्वा सन्देशं ततः प्रतिष्ठते गच्छंश्च बहून् राक्षसान् संहरति । ततश्चाहता राक्षससेना रावणान्तिकमात्मनो दीनां दशां वर्णयित्वा युद्धाय रावणमुत्तेजयति तदनुसारं च रामेण सह युद्धं कर्तुं ततो रावणस्य प्रस्थानं भवति ।

तदनु गगनगामिनौ द्वौ गन्धर्वौ चारणश्चैको–विभीषणमेकं विहाय सकलराक्षसैः सह सम्पादितं रावणवधं–सूचयन्ति । तदैव ताभ्यां गन्धर्वाभ्यां रावणस्य सदसत्क-र्मणी अपि आलोच्येते । तत्र चित्राङ्गदो गन्धर्वो रावणस्य शिवभक्तिं वर्णयन् 'पूर्वं-

कर्मानुसारं शिवभक्तोऽपि रावणो मृतः पृथिव्यां पतितो दुरवस्थां प्राप्नोतीति रावणं पापिनं प्रतिपादयति, हेमाङ्गदश्च गन्धर्वः 'शिवभक्तिप्रभावेण रावणस्य छिन्नान्यपि मस्तकानि पुनरुत्पन्नानीति रावणं पुण्यवन्तं साधयति ।

ततो नेपथ्याद् रावणविरहितस्य रथस्य घोटकैः स्वयं लङ्कायां नयनं निर्दिश्य लङ्कायां बन्दीभूतान् देवदेवाङ्गनैरावतान्प्रति कृतायां स्वर्गोपस्थानप्रेरणायां, श्रीरामचन्द्रस्य रथादवतरणं सूच्यते । तदनु पुष्पकविमानेनाऽयोध्याप्रयाणसमये लङ्कायाः समरभूमिं प्रदर्शयन् श्रीरामचन्द्रः सीतां प्रति तत्तत्स्थानीया नागपाशबन्धनाद्या छिन्ना विशिष्टा घटना वर्णयति ।

अन्ते च कविः 'प्रजाप्रणयी राजा सीतासमेतः श्रीरामचन्द्रो राज्यं परिपालयेदिति शुभाशंसनमयं भरतवाक्यं प्रतिपाद्य 'सुभट'कविना कामपि स्वीयां परकीयां च कामपि रचनामादाय नाटकस्यास्य रचना कृते'त्येवं सूचयन् दूताङ्गदनाटकं पूर्णं करोति ।

---

॥ श्रीः ॥

## दूताङ्गद नाटक के प्रतिपाद्य विषयों का विवरण ।

इस नाटक में कवि नाटकीय नियम के अनुसार प्रथम नान्दीपाठ कर सूत्रधार के वचन से दूताङ्गद नाटक के अभिनय का प्रस्ताव उपस्थित करते हुए प्रस्तावना के रूप में तदनुकूल पात्रप्रवेश की सूचना करता है और तदनुसार ही श्रीरामचन्द्र आदि पात्रों का प्रवेश होता है।

वहाँ समुद्र को पार कर सुवेल पर्वत पर विश्राम करते हुए श्रीरामचन्द्र जी द्वारा, लक्ष्मण के किये प्रस्ताव के अनुसार, प्रशंसित एवं आदिष्ट होकर अङ्गद रावण के प्रति राम का 'सीता को लौटा दो, नहीं तो लक्ष्मण के बाणों से (यह विचित्र बात है) सपरिवार मारे जाओगे' ऐसा सन्देश लेकर दूत के रूप में लङ्का में उपस्थित होता है। अङ्गद की उपस्थिति सुन रावण वार्तालाप के प्रसङ्ग में विभीषण, मन्दोदरी एवं माल्यवान् से सम्बोधित होते हुए भी सीता को लौटाना नहीं चाहता है। वहीं रावण विभीषण का परस्पर सम्बन्ध-विच्छेद होता है।

इसके अनन्तर प्रहस्त नामक द्वारपाल आकर वहाँ अङ्गद की उपस्थिति सूचित कर आदेशानुसार रावण के समीप अङ्गद को उपस्थित करता है। उस समय श्रीरामचन्द्रजी का सन्देश अङ्गद द्वारा व्यक्त होकर राम रावण दोनों को उत्तरप्रत्युत्तर-रूपी परस्पर सम्भाषणों में प्रवृत्त करता है और वहाँ अङ्गद के मुख से रामचन्द्र जी की स्थिति रावण को विदित होती है।

तब फिर आदेश पाकर प्रहस्त रावण के समीप बनावटी सीता का प्रवेश कराता

है। वहाँ उस सीता का—प्रणयपूर्वक रावण के अङ्क पर आरोहण तथा अङ्गद को अयोध्या लौट जाने का सम्बोधन आदि—प्रदर्शित होता है। इससे अङ्गद को प्रथम उस सीता की सत्यता का सन्देह—और पश्चात्, सहसा उपस्थित हुई एक राक्षसी के मुख से 'राम का कुछ अनिष्ट सुनकर सीता लता-पाश से प्राणत्याग करना चाहती है' ऐसा समाचार पाने पर—उसकी कृत्रिमता का निश्चय होता है। इस अवसर पर सीता के रक्षण का आदेश देकर रावण उस बनावटी सीता को वहाँ से हटा देता है। (यहाँ यह विलक्षण प्रसङ्ग कवि ने मानसिक कल्पना के आधार पर दिखाया है।)

फिर परस्पर संवाद द्वारा रावण अपनी—तथा अङ्गद श्रीरामचन्द्र जी की—अनुपम वीरता का वर्णन करते हैं। इस प्रसङ्ग में कुपित होता हुआ रावण अङ्गद को मारने का भय दिखा कर अपने सामने से हट जाने को कहता है। अङ्गद भी 'सीता को लौटा दो, नहीं तो रामचन्द्र जी से मारे जाओगे' ऐसा अन्तिम सन्देश सुनाकर वहाँ से चला जाता है और जाते जाते बहुत से राक्षसों का संहार करता है। तब आहत हुई राक्षस-सेना रावण के समीप अपनी दीन दशा का वर्णन कर युद्ध के लिए रावण को उत्तेजित करती है और तदनुसार राम से युद्ध करने के लिए वहाँ से रावण का प्रस्थान होता है।

तत्पश्चात् आकाशगामी दो गन्धर्व और एक चारण—अकेले विभीषण को छोड़ सब राक्षसों के साथ किये गये रावणवध को—सूचित करते हैं। उसी समय उन गन्धर्वों द्वारा रावण के अच्छे-बुरे कर्मों की आलोचना होती है। उसमें चित्राङ्गद गन्धर्व रावण की शिवभक्ति का वर्णन करते हुए 'पूर्वकर्म के अनुसार शिवभक्त रावण भी मर कर पृथ्वी पर पड़ा दुर्दशा पा रहा है' इस प्रकार रावण को पापी कहता है और हेमाङ्गद गन्धर्व 'शिवभक्ति के प्रभाव से रावण के कटे सिर भी फिर उत्पन्न हुए' इस प्रकार रावण को पुण्यवान् सिद्ध करता है।

तब नेपथ्य से बिना रावण के रथ का स्वयं घोड़ों द्वारा लङ्का में ले जाया जाना बता कर लङ्का में बन्दी हुए देव, देवाङ्गना और ऐरावत हाथी के प्रति स्वर्ग में उपस्थित होने की प्रेरणा की जाने पर, श्रीरामचन्द्र जी का रथ से अवतरण सूचित होता है। फिर पुष्पक विमान से अयोध्या जाते समय लङ्का की युद्धभूमि दिखाते हुए श्रीरामचन्द्र जी सीता के प्रति उन उन स्थलों की नागफाँस बन्धन-आदि दो तीन विशिष्ट घटनाओं का वर्णन करते हैं।

अन्त में कवि 'प्रजाप्रेमी राजा सीता-समेत श्रीरामचन्द्र जी राज्य का परिपालन करें' ऐसे शुभाशंसन-रूप भरतवाक्य का प्रतिपादन कर 'सुभट'कवि ने कुछ अपनी तथा कुछ दूसरों की रचना लेकर इस नाटक की रचना की' इस प्रकार सूचित करते हुए दूताङ्गद नाटक को पूर्ण करता है।

## दूताङ्गदनाटकेऽस्मिन् प्रविष्टानां पात्राणां परिचयः

| | |
|---|---|
| सूत्रधारः— | नाटकसञ्चालकः । |
| नटी— | सूत्रधारप्रिया । |
| रामः— | आदर्शपुरुषो नायकः । |
| लक्ष्मणः— | रामस्य वैमात्रेयो भ्राता । |
| अङ्गदः— | रामस्य दूतः सेवकः । |
| सुग्रीवः— | रामस्य मित्रं वानरसेनापतिः । |
| रावणः— | प्रतिनायकः । |
| मन्दोदरी— | रावणस्य महिषी । |
| विभीषणः— | रावणस्य भ्राता रामभक्तः । |
| माल्यवान्— | रावणस्य मातामहः । |
| प्रहस्तः— | रावणस्य प्रतीहारः सेनापतिः । |
| मायामैथिली— | रावणसम्पादिता कृत्रिमा सीता । |
| राक्षसी— | रावणान्तःपुरस्था काचित् । |
| निशाचराः— | रावणस्य किङ्करा भटाः । |
| हेमाङ्गदः— | गगनचारी गन्धर्व एकः । |
| चित्राङ्गदः— | हेमाङ्गदस्य मित्रं द्वितीयो गन्धर्वः । |
| चारणः— | ( गगनचारी ) कश्चित् । |



॥ श्रीः ॥

महाकविश्रीसुभटकृतं

# दूताङ्गदं नाम नाटकम्

'दूताङ्गदचन्द्रिका'-संस्कृतहिन्दीव्याख्याद्वयोपेतम् ।

पायात्स वः कुमुदकुन्दमृणालगौरः
शङ्खो हरेः करतलाम्बरपूर्णचन्द्रः ।

---

चिद्वल्ली कलितार्या ललिताख्या विगलिताऽगुणा सगुणा ।
अरुणा करुणापूर्णा पूर्णानन्दाय साऽस्तु नस्तूर्णम् ॥ १ ॥
गणराजगीर्गुरूणां स्मृत्वा 'वेताल'वंशकुमुदेन्दुः ।
प्राज्ञः कश्चि'दनन्तो' 'दूताङ्गदचन्द्रिका'मिमां तनुते ॥ २ ॥

अथ महाकविः श्री'सुभटो' नाम दूताङ्गदं नाटकं प्रारिप्सुः शिष्टाचारपरम्परामनुसरन्नान्दीमुखेन मङ्गलमाचरति—

**पायात्स** इति । कुमुदकुन्दमृणालगौरः, कुमुदं = कैरवं चन्द्रविकासि धवलं कमलं कुन्दं = माघमासोद्भवं श्वेतपुष्पं मृणालं = बिसं कमलमूलं तानीव गौरः = धवलः, करतलाम्बरपूर्णचन्द्रः, करतले = हस्तमध्यभाग एव अम्बरे = आकाशे पूर्णचन्द्रः = षोडशकलात्मकचन्द्रमःस्वरूपः, सः = प्रसिद्धः, हरेः = विष्णोः, शङ्खः = पाञ्चजन्यो नाम कम्बुः, वः = युष्मान् सामाजिकान्, पायात् = रक्षेत् ।

---

श्री शङ्कर के अङ्कस्थल में खिलती सजीव लाली है ।
सौभाग्य सूर्य के उस अरुणोदय को प्रणाम कर सिर से ॥ १ ॥
गुरुदेव की दया से द्विजवर 'वेताल'वंश कैरव का ।
काशिक 'अनन्त' कोई 'दूताङ्गदचन्द्रिका' बनाता है ॥ २ ॥

कैरव, कुन्द पुष्प तथा कमलमूल ( बिस ) के समान श्वेतवर्ण, हथेलीरूपी आकाश में पूर्णचन्द्रमास्वरूप, विष्णु भगवान् का पाञ्चजन्य नामक वह शङ्ख, तुम

नादेन यस्य सुरशत्रुविलासिनीनां
काञ्च्यो भवन्ति शिथिला जघनस्थलीषु ॥ १ ॥

अपि च ।

शम्भोः कोदण्डभङ्गादविदितविभवः शक्रसूनोर्विनाशा-

---

यस्य = शङ्खस्य, नादेन शब्देन, सुरशत्रुविलासिनीनाम्, सुराणां = देवानां शत्रवः= रिपवो दैत्याः तेषां विलासिनीनां = स्त्रीणाम्, जघनस्थलीषु = कटिपुरोभागेषु, काञ्च्यः = मेखलाः, शिथिलाः = शलथाः किञ्चिन्मुक्तबन्धनाः, भवन्ति = जायन्ते । ( भगवतो विष्णोः करे वर्तमानो धवलवर्णः शङ्खः सर्वेषां प्रेक्षकाणां रक्षणं कुर्यात्, यदीयं शब्दमाकर्ण्य दैत्यस्त्रियो भृशं भयचकिता भवन्तीति भावः । ) वसन्ततिलका वृत्तम् ॥ १ ॥

नान्दीलक्षणमुक्तं **साहित्यदर्पणे**—

"आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रयुज्यते । देवद्विजनृपादीनां, तस्मान्नान्दीति संज्ञिता
मङ्गल्यशङ्खचन्द्राब्जकोककैरवशंसिनी । पदैर्युक्ता द्वादशभिरष्टभिर्वा पदैरुत ॥"

इयञ्चात्र शङ्खसूचिका नान्दी । अस्या द्वादशपदात्वमष्टपदात्वं वेत्युपलक्षणमात्रम् । अत्रैव द्वादशाधिकपदायास्तस्या दर्शनान्महाकविकालिदासादिप्रबन्धेष्वपि बहुषु स्थलेष्वित्थमेवोपलब्धेः ।

अपिच = किञ्च ।

एकेन मङ्गलेनाऽपरितुष्यन् पुनरपि द्वितीयं प्रासङ्गिकं मङ्गलमाचरन्नाह कविः—

**शम्भो**रिति । कैकसीनन्दनेन = कैकस्याः-पुत्रेण रावणेन, पदमिदं वैष्णव-

---

सामाजिकों की रक्षा करे, जिसके शब्द से दैत्यस्त्रियों के जघन भाग में (स्थित) करधनियाँ ढीली हो जाती हैं । (अर्थात् जिस शङ्ख का शब्द सुन कर दैत्यों की स्त्रियाँ भयभीत होती हैं । ) वसन्ततिलका छन्द है ॥ १ ॥

'आशीर्वचन' इत्यादि नान्दीलक्षण 'साहित्यदर्पण' में कहा गया है । यहाँ यह नान्दी शङ्ख का वर्णन कर रही है । 'नान्दी बारह पदों की अथवा आठ पदों की होती है' यह केवल उपलक्षण है, क्योंकि इसी पद्य में बारह से अधिक-पदवाली वह दिखाई पड़ रही है और महाकवि कालिदास-आदि के प्रबन्धों में भी बहुत स्थानों में इसी प्रकार मिलता है ।

और भी,

रावण को, शङ्कर जी का धनुष तोड़ने से जिसके ऐश्वर्य अथवा महत्त्व का

दज्ञातः सेतुबन्धादपि नपरिचितः कैकसीनन्दनेन ।
संवादादङ्गदस्याप्यनधिगतगतिः कारणान्मर्त्यमूर्ते-
र्भूयाद् भूत्यै जनानां जगति रघुपतेर्वैष्णवः कोऽपि भावः ॥ २ ॥

[ नान्द्यन्ते ]

---

भावस्य सर्वेष्वपि विशेषणेषु कर्तृत्वेन योजनीयम्, शम्भोः = शिवस्य, कोदण्ड-भङ्गात् = धनुषो द्विधाकरणात्, अविदितविभवः, अविदितः = अज्ञातः विभवः = ऐश्वर्यं महत्त्वं वा यस्य तादृशः, शक्रसूनोः = इन्द्रपुत्रस्य वालिनः, विनाशात् = वधात्, अज्ञातः = ज्ञानविषयत्वं न यातः, सेतुबन्धात् = समुद्रोपरि सञ्जातात् सेतु-निर्माणकार्यादपि, नपरिचितः = परिचयं न प्राप्तः, न शब्देन सह 'सुप् सुपे'ति समासोऽयम्, अङ्गदस्य = वालिपुत्रस्य, संवादात् = प्रश्नोत्तररूपात्परस्परसम्भाषणा-दपि, अनधिगतगतिः, अनधिगता = अप्राप्ता गतिः = ज्ञानं यस्य तादृशः, कारणात् = जगद्रक्षणादिनिमित्तात्, मर्त्यमूर्तेः, मर्त्यः = मनुष्यरूपा मूर्तिः = शरीरं यस्य तादृशस्य मायामानुषरूपिण इत्यर्थः, रघुपतेः = रघुवंशीयस्य श्रीरामचन्द्रस्य, कोऽपि = अवर्णनीयः, वैष्णवः भावः = विष्णोरयं विष्णुसम्बन्धी भावः विष्णुत्वं देवरूपत्वमिति यावत्, जगति = संसारे, जनानां = लोकानां, भूत्यै = सम्पत्तये कल्याणाय वा, भूयात् = जायेत । ( भूभारहरणाय मनुष्यशरीरधारिणः श्रीमतो रामचन्द्रस्य शिवधनु-र्भङ्गवालिवधसेतुबन्धाङ्गदसंवादरूपैरमानुषैः कार्यैरपि न ज्ञातवान् रावणो यद्वैष्णवं रूपं, तदत्र संसारिणां कल्याणं कुरुतादित्याशयः । ) स्रग्धरा वृत्तम् ॥ २ ॥

नान्द्यन्ते, नान्द्याः=पूर्वप्रदर्शितमङ्गलाचरणद्वयरूपायाः स्तुत्याः अन्ते=समाप्तौ ।

---

बोध न हुआ–वाली के वध से जिसका ज्ञान नहीं हुआ–समुद्र पर पुल बाँधने से भी जिसका परिचय न मिला तथा अङ्गद के संवाद से भी जिसका पता न चला–( लोकरक्षण आदि ) कारण से मनुष्य–रूप धारण करनेवाले श्री रामचन्द्रजी का वह अलौकिक विष्णुरूप ( अवतारी पुरुष होना ) जगत् में लोगों के ऐश्वर्य अथवा कल्याण के लिए हो । (भाव यह है—पृथ्वी का भार हरण करने के लिए मनुष्य का शरीर धारण करनेवाले श्री रामचन्द्र जी के किये हुए–शिवधनुषभङ्ग, वालिवध, सेतुबन्ध तथा अङ्गदसंवाद रूपी–अमानुष कार्यों से भी जिस विष्णु रूप को रावण नहीं समझा, वह (विष्णुरूप) यहाँ संसारी पुरुषों का कल्याण करे ।) स्रग्धरा छन्द है ॥२॥

[ नान्दी के अन्त में ]

**सूत्रधारः**—[ परिक्रम्य नेपथ्याभिमुखमवलोक्य । ] प्रिये । विलासवति ! इतस्तावत् ।

[ प्रविश्य ]

**नटी**—अज्जउत्त! इअह्मि । आणवेदु अज्जो जं करणिज्जम् । (आर्यपुत्र ! इयमस्मि । आज्ञापयत्वार्यो यत्करणीयम् । )

**सूत्रधारः**—विश्वविश्वम्भराभारसमुद्धरणादिवराहस्य निजभुजयुगलविदलितसकलवैरिवृन्दसुन्दरीनेत्रनीलोत्पलविगलितबहलबाष्पपूरप्लवमानप्रता-

---

नान्दीविधानानन्तरमित्यर्थः ।

कविरिदानीं सूत्रधारमुखेन नाटकस्य कवेश्च नामादिकं सूचयिष्यन् सूत्रधारं प्रवेश्य तदुक्तिं दर्शयति—**परिक्रम्ये**त्यादि । परिक्रम्य = इतस्ततः परिभ्रम्य, नेपथ्याभिमुखमवलोक्य = नेपथ्यसंमुखे दृष्टिं दत्वा । नेपथ्यं हि पात्राणां तत्तद्वेषग्रहणसाधनं स्थानम्, जवनिकान्तर्भाग इत्यर्थः । विलासवतीति नट्या आगमिष्यन्त्या नामधेयम् । इतस्तावत् = अस्मिन्प्रदेशे, उपस्थिता भवेति शेषः । सूत्रधारस्तु, सूत्रं = नाटकबीजं धारयति = सामाजिकानां पुरः स्थापयतीति तादृशः । स चात्र—

'रूपकस्य कवेराख्यां गोत्राद्यपि स कीर्तयेत् ।'

इत्युक्तलक्षणः ।

सूत्रधारसूचनानुसारं नटीप्रवेशं दर्शयति—**प्रविश्येति** ।

**अज्जउत्त** इति । आर्यपुत्रशब्देन पत्युर्नाम्नः सङ्केतो नाटकेषु क्रियते । सूत्रधारश्च नट्याः पतिरेवेति तं प्रति तथा निर्देशः । **इअम्हि** इति । उपस्थितेति शेषः । आज्ञापयतु = आदिशतु, करणीयं = कर्तुं योग्यं कार्यम् । एषाहमुपस्थितास्मि । कर्तव्यं कार्यं निर्दिश्य मामनुगृह्णातु तत्रभवानित्यर्थः ।

ततः प्रकृतं वर्णनीयं विषयमाह सूत्रधारः—**विश्वविश्वम्भरे**त्यादि । विश्वविश्वम्भराभारसमुद्धरणादिवराहस्य, विश्वस्याः = सर्वस्याः विश्वम्भरायाः = पृथिव्याः

---

**सूत्रधार**—[ इधर उधर घूमकर नेपथ्य ( पर्दे ) की ओर देखकर ] प्यारी ! विलासवती ! इधर तो ( आओ ) ।

[ प्रवेश करके ]

**नटी**—पतिदेव ! यह मैं ( उपस्थित ) हूँ । जो करना हो, श्रीमान् आज्ञा दें ।

**सूत्रधार**—अपनी भुजाओं से चूर्णित किये हुए सम्पूर्ण शत्रुओं के समूह की

पराजहंसस्य महाराजाधिराजश्रीमत्त्रिभुवनपालदेवस्य परिषदाज्ञया प्रबन्धविशेषमहमुपक्रममाणोऽस्मि। भो भोः सामाजिकाः! शृणुत सावधानाः, यदद्य वसन्तोत्सवे देवश्रीकुमारपालदेवस्य यात्रायां पदवाक्यप्रमाणपार-

---

भारस्य = भरस्य समुद्धरणे = उत्थापने आदिवराहस्य = विष्णोर्वराहावतारस्वरूपस्य, निजभुजयुगलविदलितसकलवैरिवृन्दसुन्दरीनेत्रनीलोत्पलविगलितबहलवाष्पपूरप्लवमानप्रतापराजहंसस्य, निजभुजयोः = स्वीयबाह्वोः युगलेन = द्वयेन विदलितस्य = चूर्णीकृतस्य सकलवैरिवृन्दस्य = सर्वेषां शत्रूणां समूहस्य सुन्दरीणां = स्त्रीणां नेत्रनीलोत्पलेभ्यः = नयनरूपेभ्यो नीलवर्णकमलेभ्यः विगलितानां = निर्गतानां बहलवाष्पाणां = बहूनां रोदनजलानां पूरे = प्रवाहे प्लवमानः = तरन् प्रतापः = प्रभाव एव राजहंसः = तन्नामा पक्षिविशेषो यस्येत्येतादृशस्य परमप्रतापनिधेरित्यर्थः, त्रिभुवनपालदेवस्य = तदाख्यस्य जैनाचार्यस्य राजाधिराजस्य, परिषदाज्ञया = सभाया आदेशेन, अत्र परिषत्पदं पूर्वपदेन सह समस्तं व्यस्तं वा युज्यते, प्रबन्धविशेषं = रूपकभेदं नाटकम्, उपक्रममाणः अस्मि = अहं प्रारभे। इत्येवं स्वीयं कर्तव्यमुक्त्वा नाटकदर्शनाय समागतान्सभ्यान् प्रत्याह—**भो भो** इति। सावधानाः = दत्तचित्ताः, भूत्वेति शेषः। तदेव कथनीयमाह—**यदद्येति**। यात्रायां = शोभानिरीक्षणाय ससमाहं क्रियमाणे नगरपरिभ्रमणमहोत्सवे, पदवाक्यप्रमाणपारङ्गतेन, पदे = शब्दशास्त्रे व्याकरणे वाक्ये = विधिवाक्ये मीमांसायां प्रमाणे = प्रत्यक्षादिप्रमितिकरणे न्याये च पारङ्गतेन = पारगामिना परिपूर्णेन विदुषा, दूताङ्गदं नाम = दूताङ्गदनाम्ना प्रसिद्धम्,

---

स्त्रियों के नेत्रकमलों से निकले हुए बहुत से आँसुओं के प्रवाह में जिनका प्रभाव (राजतेज) रूपी हंसराज तैर रहा है ऐसे, सकल पृथ्वी का भार धारण करने में वराहावतारविष्णुस्वरूपी; उन श्रीत्रिभुवनपाल देव राजाधिराज महोदय की सभा के आदेश से मैं रूपक–भेद नाटक का आरम्भ कर रहा हूँ। अजी अजी दर्शक लोगो! दत्तचित्त (होकर) सुनो कि आज वसन्त के उत्सव में श्रीकुमारपालदेव महाराज की सवारी में, व्याकरण–मीमांसा–न्याय के पारगामी महाकवि श्री 'सुभट' के बनाये हुए 'दूताङ्गद' नामक छायानाटक का अभिनय करना होगा। (स्पष्ट अर्थ यह है–सारे जगत् की रक्षा के बोझ को धारण करनेवाले, महारथी, शत्रुओं का मदमर्दन करने में निपुण, परमप्रतापी, श्री त्रिभुवनपाल राजाधिराज महोदय–राज्य-

ङ्गतेन महाकविना श्रीसुभटेन विनिर्मितं दूताङ्गदं नाम च्छायानाटकमभिनेतव्यम्।

**नटी**—अज्जउत्त ! जुत्तं ववसिदम्। (आर्यपुत्र ! युक्तं व्यवसितम्।)

[ नेपथ्ये ]

तारापतौ वानरराजलक्ष्मीं निहत्य यो वालिनमानिनाय।

---

दूतः अङ्गदो यस्मिन्नाटके तदिति बहुव्रीहिः, अङ्गदस्य दौत्यं प्रदर्शयदित्यर्थः, छायानाटकं = संक्षिप्तं छायास्वरूपेण दर्शनीयमेकाङ्कं नाटकम्, अभिनेतव्यं = तत्स्वरूपं पुरस्तात्कृत्वा स्पष्टरूपेण प्रदर्शनीयम्। (सकलजगद्रक्षाधुरन्धरो महारथी शत्रुमदमर्दननिपुणः परमप्रतापी धराधीश्वरश्रीत्रिभुवनपालदेवो राज्यपरिषत्पतिराज्ञापयतीति नाटकमारभणीयं मया। सामाजिकैः श्रोतव्यमिदंय दिदानीं भूपालवरश्रीकुमारपालदेवस्य वसन्तविहारमहोत्सवे महाकविश्रीसुभटनिर्मितदूताङ्गदनाटकस्य प्रयोगः करणीय इति संक्षिप्तः स्पष्टोऽर्थः।)

तदन्तरं नटी ब्रूते—**अज्जउत्त** इति। व्यवसितं = व्यवसाय उद्योगः कार्यमिति यावत्, भावे क्तः, युक्तम् = उचितम्। अवश्यमेतत्करणीयमित्यर्थः।

[ नेपथ्ये ] = वेषग्रहणस्थाने, जवनिकाभ्यन्तरे।

करिष्यमाणपात्रप्रवेशसूचनपूर्वकं नेपथ्यगतं शब्दमाह—

**तारापताविति**। यः, वालिनं = तन्नामकम् अङ्गदपितरं वानरपतिं, निहत्य = मारयित्वा, वानरराजलक्ष्मीं = मर्कटानां राज्यं, तारापतौ, तारायाः = अनाथाया वालिस्त्रियाः पतौ = पालके सुग्रीवे, सप्तमी चेयं सामीप्येऽधिकरणत्वस्य विवक्षया, अविवक्षायां तु कर्मत्वेन 'तारापतिम्' इति स्यात्, आनिनाय = प्रापयामास। तीर्णार्णवः, तीर्णः = तरणविषयीकृतः इष्टपार इति यावत् अर्णवः = समुद्रः येन सः,

---

सभा के अधिपति—आज्ञा दे रहे हैं, इसलिए मुझे नाटक का आरम्भ करना है। सामाजिक लोग यह सुनें कि इस समय महाराज श्रीकुमारपालदेव महोदय के वसन्तविहार महोत्सव में महाकवि श्री सुभट के बनाये हुए दूताङ्गद नाटक का प्रयोग करना होगा।)

**नटी**—आर्यपुत्र ! उचित उद्योग (कार्य) है। (इसे अवश्य करना चाहिए।)

[ पर्दे के भीतर ]

जो वाली को मारकर वानरों की राज्यलक्ष्मी तारा के पालक सुग्रीव के समीप लाये अर्थात् जिन्होंने सुग्रीव को वानरों का राजा बना दिया, वे समुद्रपार गये हुए

तीर्णार्णवो दाशरथिः स देवः सुवेलशैलोपवनेष्वखेलत् ॥ ३ ॥

**सूत्रधारः**—आर्ये ! प्रारब्धमेव कुशीलवैः । इहैव रामानुचराणां परस्परालापाः श्रूयन्ते । तदेहि । आवामप्यनन्तरकरणीयाय सज्जीभवावः ।

[ इति निष्क्रान्तौ । ]

---

दाशरथिः = दशरथस्य पुत्रः, अत इञ्, सः = प्रसिद्धः, देवः = श्रीरामचन्द्रः, सुवेलशैलोपवनेषु = सुवेलपर्वतस्योद्यानेषु, अखेलत, भूतकालक्रिययात्र वर्तमानकालक्रिया विवक्षिता, विहरतीत्यर्थः । (सुग्रीवं वानरपतिं कृत्वा समुद्रं च तीर्त्वा सम्प्रति रामचन्द्रः सुवेलपर्वते विराजमानोऽस्तीति तात्पर्यम् ।) उपजातिर्वृत्तम् ॥ ३ ॥

इत्थं नेपथ्ये कृतां भाविनाटकप्रवेशसूचनां निशम्य नटीं सूत्रधारो ब्रवीति-**आर्ये** इति । नट्याः सम्बोधनमिदम्, प्रारब्धमेव = प्रारम्भः कृत एव, कुशीलवैः = नटैः । रामानुचराणां = रामचन्द्रस्य सेवकानां वानराणां, परस्परालापाः, परस्परस्य= अन्योन्यस्य एकस्यान्येन सहेति यावत् आलापाः = सम्भाषणानि, श्रूयन्ते = कर्णविवराभ्यन्तरं गच्छन्ति । तत् = तस्मात्कारणात्, एहि=आगच्छ । अनन्तरकरणीयाय= इतः पश्चाद् यत्कार्यं कर्तव्यं तदर्थं, सज्जीभवावः, विध्यर्थे लट्, उद्यतौ जायावहै आवाम्। (रामचन्द्र इहेदानीमुपस्थितो भवतीति कार्यान्तरं कर्तुमावाभ्यामपि गन्तव्यमित्यर्थः ।)

इति निष्क्रान्ताविति । इत्येवं कथयित्वा सूत्रधारो नटी चेति द्वावपि रङ्गस्थलान्निर्गतावभूताम् ।

---

दशरथ के पुत्र श्रीरामचन्द्र जी सुवेल पर्वत के बागों में विहार कर रहे हैं । (तात्पर्य यह है-सुग्रीव को वानरपति बनाकर समुद्र को पार करके इस समय रामचन्द्र जी सुवेल पर्वत पर विराजमान हैं । ) उपजाति वृत्त है ॥ ३ ॥

**सूत्रधार**—पूज्ये ! नटों ने आरम्भ कर ही दिया । यहीं पर रामचन्द्र जी के सेवकों (वानरों) की आपस की बातें सुनाई पड़ रही हैं । तो आओ । हम तुम भी, इसके पश्चात् जो कुछ करना है, उसके लिए उद्यत होजायँ । ( अर्थात् इस समय यहाँ रामचन्द्र जी उपस्थित हो रहे हैं, अतः हम तुम भी दूसरा काम करने को जायँ । )

[ इस प्रकार ( कहकर सूत्रधार और नटी दोनों रङ्गस्थल से ) निकल गए । ]

प्रस्तावना।

[ ततः प्रविशतः सुवेलशैलशिलातलासीनौ रामलक्ष्मणौ, सुग्रीवादिपरिवारश्च। ]

**रामः**—[ लक्ष्मणं प्रति। ] **वत्स ! लक्ष्मण !**

**तीर्णोऽर्णवः कवलितेव कपीश्वरस्य**
**सेनाभटैर्झटिति राक्षसराजधानी।**

---

**प्रस्तावने**ति। 'सूत्रधारेण पूर्वं प्रकृतनाटकप्रयोगप्रदर्शनरूपो यः प्रस्ताव उपस्थापित आसीत्तदनुसारमेव नटैर्नेपथ्ये समयोचितपात्रप्रवेशः सूचित' इत्यसौ प्रस्तावना कथ्यते। सा चात्र पञ्चसु भेदेषु 'प्रवर्तक'नामिका वर्तते। सर्वमिदं **दर्पणे** प्रतिपादितम्—

'नटी विदूषको वापि पारिपार्श्विक एव वा।
सूत्रधारेण सहिताः संलापं यत्र कुर्वते॥
चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः।
आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा॥'
'कालं प्रवृत्तमाश्रित्य सूत्रधृग् यत्र वर्णयेत्।
तदाश्रयश्च पात्रस्य प्रवेशस्तत् प्रवर्तकम्॥' इति।

नेपथ्यकृतसूचनानुसारमिदानीं पात्रप्रवेशं प्रक्रमते—**ततः प्रविशत** इत्यादिना। सुवेलशैलशिलातलासीनौ = सुवेलपर्वतस्य शिलाया उपरिष्टात्समुपविष्टौ, सुग्रीवादिपरिवारश्च = सुग्रीवाङ्गदप्रभृतिः सेवकवर्गश्च, प्रविशतीति वचनविपरिणामः।

प्रविष्टस्य रामस्य लक्ष्मणमुद्दिश्य वचनमाह—**वत्से**ति। तथाहि—

**तीर्णोऽर्णव** इति। अर्णवः = समुद्रः, तीर्णः = पारं गमितः, अर्थादस्माभिः,

---

'सूत्रधार ने पहले इस दूताङ्गद नाटक के प्रयोग को दिखलाने का जो प्रस्ताव उपस्थित किया था, उसके अनुसार ही नटों ने नेपथ्य में समयोचित पात्रप्रवेश की सूचना की' इसलिए यह प्रस्तावना कही जाती है और वह यहाँ पाँच भेदों में से 'प्रवर्तक' नाम की है। यह सब **दर्पण** में 'नटी विदूषको······प्रवर्तकम्' इन पद्यों से कहा गया है।

[ तब सुवेल पर्वत की चट्टान पर बैठे हुए राम लक्ष्मण तथा सुग्रीव अङ्गद आदि सेवक लोग प्रवेश करते हैं। ]

**राम**—[ लक्ष्मण से ] बच्चे ! लक्ष्मण !

( हम लोगों ने ) समुद्र को पार कर लिया, सुग्रीव के वीर सैनिकों ने झट

यत्पौरुषोचितमिहाद्य कृतं मया त-
द्दैवस्य वश्यमपरं धनुषोऽथवास्य ॥ ४ ॥

**लक्ष्मणः**—आर्य ! कातरजनमनोऽवलम्बिना दैवेन किम् ?

उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-
र्दैवं हि दैवमिति कापुरुषा वदन्ति ।

---

कपीश्वरस्य = वानरपतेः सुग्रीवस्य, सेनाभटैः = वीरसैनिकैः, झटिति = शीघ्रं, राक्षसराजधानी = रावणस्य राज्यस्थानं लङ्केति यावत्, कवलिता इव = नूनं ग्रस्ता। अद्य = वर्तमानसमये, इह = अत्र, पौरुषोचितं = पुरुषार्थयोग्यं, यत् = कार्यम्, आसीदिति शेषः, तत् = कार्यं, मया = रामेण, कृतं = सम्पादितम्। अपरम् = अन्यद् युद्धविजयरूपं कार्यं, दैवस्य = भाग्यस्य, अथवा = किंवा, अस्य=मत्करस्थस्य, धनुषः = कोदण्डस्य, वश्यम् = अधीनम् अस्ति। (सागरतरणलङ्काक्रमणरूपं तु कार्यं जातम्, विजयफलमिदानीं भाग्येन धनुषा वा लभ्यमिति भावः।) वसन्ततिलका वृत्तम्॥

रामोक्तौ लक्ष्मणोक्तिं दर्शयति—**आर्येति**। कातरजनमनोऽवलम्बिना, कातरजनस्य = अधीरस्य आलस्यपूर्णस्य लोकस्य मनः = चित्तम् अवलम्बते = आश्रयति यत् तेन, किं = किं भवेत्, न किमपीत्यर्थः। (अलसपुरुषाणां मनसि स्थितं दैवं किं कार्यं कर्तुं शक्नोतीति भावः।) तदेवाह—

**उद्योगिन**मिति। लक्ष्मीः = सम्पत्तिः, उद्योगिनं = प्रयत्नशीलं, पुरुषसिंहं = मनुष्यश्रेष्ठम्, उपैति = समीपमागच्छति। हि = निश्चयेन, दैवं दैवं, द्विरुक्तिरियं

---

लङ्का को मानों ग्रस लिया है। आज यहाँ पुरुषार्थ के योग्य जो (कुछ) कार्य (था) वह मैंने किया। दूसरा (युद्धविजयरूपी कार्य) भाग्य किंवा इस (मेरे हाथ के) धनुष के अधीन है। (समुद्र को पार करना तथा लङ्का पर आक्रमण करना-यह कार्य तो होगया, अब विजयरूपी फल भाग्य अथवा धनुष से मिलने योग्य है।) वसन्ततिलका छन्द है ॥ ४ ॥

**लक्ष्मण**—पूज्यवर! कायरों के मन का जो सहारा लेता है अथवा कायरों का मन जिसका सहारा लेता है, उस दैव से क्या होगा? अर्थात् कुछ नहीं। (आलसी लोगों के मन में बैठा हुआ दैव क्या काम कर सकता है?)

उद्योगी श्रेष्ठ मनुष्य के समीप सम्पत्ति आती है। भाग्य ही भाग्य (प्रधान) है-यह आलसी लोग कहते हैं। भाग्य को मार (दबा) कर अपने सामर्थ्य से

दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ? ॥ ५ ॥

अपि च !

यावल्ललाटशिखरं भ्रुकुटिर्न याति
यावन्न कार्मुकशिखामधिरोहति ज्या !

---

भाग्यस्य प्रधानतां ब्रूते, भाग्यं प्रधानम्, इति = इदं, कापुरुषाः = कुत्सिता अलसा मनुष्याः, वदन्ति=कथयन्ति । 'दैवेन देयम्' इति पाठे–'भाग्येन दातव्यम्, भाग्यमेव सर्वं प्रदातुं प्रभवती'ति भावः । दैवं=भाग्यं, निहत्य = हत्वा आक्रम्य, आत्मशक्त्या= स्वीयेन सामर्थ्येन, पौरुषम् = उद्योगं, कुरु = सम्पादय । यत्ने = उद्योगे, कृते = सम्पादिते सति, यदि = चेत्, न सिध्यति = सिद्धिं न गच्छति, अर्थात्कार्यम्, तर्हीति योज्यम्, अत्र=अस्मिन्विषये प्रयत्नशीलस्य पुरुषस्य कार्याऽसिद्धौ, कः दोषः = किं दूषणम्, न किमपीत्यर्थः । ( उद्योगी पुरुषः सम्पत्तिमान् भवति, अलसाश्च दैवं शरणं गच्छन्ति । दैवमविचार्य पूर्णं प्रयत्नं कुर्वाणो नरः सफलो न भवति चेदत्र कोऽपि तस्यापराधो नास्तीति भावः । ) वसन्ततिलका वृत्तम् ॥ ५ ॥

पुनरप्याह लक्ष्मणः—अपिचेत्यादि ।

**यावदिति** । यावत्=यत्समयावधि, अस्माकमिति शेषः, भ्रुकुटिः=भ्रुवोर्भङ्गः, ललाटशिखरं=भालस्याग्रभागं, न याति=न गच्छति, एतेन क्रोधः सूच्यते, यावत्, ज्या=मौर्वी, कार्मुकशिखां=धनुषोऽग्रं, न अधिरोहति = न अधितिष्ठति, तावत्=तत्समयावधि, निशाचरपतेः=रावणस्य, त्रैलोक्यमूलविभुजेषु, त्रैलोक्यस्य=भुवनत्रयस्य मूलम्=आधारं विभुजन्ति=कुटिलं कुर्वन्तीति तेषु जगत्कम्पकरेषु, भुजेषु = बाहुषु,

---

उद्योग करो । उद्योग करने पर यदि ( कार्य ) सिद्ध नहीं होता, तो क्या दोष है ? अर्थात् कुछ नहीं । ( भाव यह है–उद्योगी पुरुष सम्पत्तिमान् होता है, आलसी लोग दैव की शरण जाते हैं । दैव को न सोचकर पूरा प्रयत्न करनेवाला मनुष्य यदि सफल नहीं होता है, तो इसमें कोई उसका अपराध नहीं है। वसन्ततिलका छन्द है ५॥

और भी,

जब तक ( हम लोगों की ) भ्रुकुटि ( त्योरी ) माथे के ऊपर नहीं जाती अर्थात् भौंहें ऊपर नहीं होतीं, जब तक प्रत्यञ्चा ( डोरी ) धनुष के अग्रभाग पर नहीं चढ़ती अर्थात् धनुष खींचा नहीं जाता, तब तक तीनों लोकों की जड़ टेढ़ी करनेवाली

तावन्निशाचरपतेः पटिमानमेतु
त्रैलोक्यमूलविभुजेषु भुजेषु दर्पः ॥ ६ ॥

तदादिश्यतामङ्गदाय दौत्यम् ।

**रामः**—[ अङ्गदं सबहुमानमालोक्य ] **वत्स !**

पिता ते यद्वाली बलिनि दशकण्ठे कलितवा-
न्न तद्वक्तुं शक्ता वयमयमुदास्ते न पुलकः ।

---

दर्पः=अहङ्कारः, पटिमानं=पटुत्वं प्रौढत्वमिति यावत् , एतु=गच्छतु । ( यावद् भ्रुकुटिं बद्ध्वा क्रोधमुद्रा न प्रदर्श्यते कार्मुकं च नाकृष्यतेऽस्माभिस्तावद् रावणो विश्वोपद्रवकारकेषु निजबाहुषु दर्पं नाटयत्वित्याशयः । ) वसन्ततिलका वृत्तम् ॥ ६ ॥

**तदादिश्यताम्** इति । तत्=तस्मात्कारणात् अङ्गदाय=वालिपुत्राय युवराजाय, दौत्यं=दूतस्य कर्म, आदिश्यताम्=आसमन्ताद् दीयताम्, आज्ञाप्यतां वा ।

दौत्यं कर्तुं समर्थेऽङ्गदे सादरां दृष्टिं निक्षिपतो रामस्य तं प्रति वचनमाह—**वत्सेति** । तथाहि—

**पितेति** । वाली=तन्नामको वानरेन्द्रः, ते=तव, पिता=जनकः, बलिनि=शक्तिशालिनि, दशकण्ठे=रावणे, यत्=यत्कार्यं विलक्षणं, कलितवान्=कृतवान्, कलतिः कामधेनुः, तत्=तथाविधं कार्यं, वक्तुं = कथयितुं, वयं=रामादयः, न शक्ताः=न समर्थाः स्मः । अयम्=एष प्रत्यक्षदृश्यः, पुलकः = रोमाञ्चः, न उदास्ते=उदासीनो न भवति, अस्मानुत्साहयुक्तान् कृत्वा किमपि कार्यं कारयितुमिच्छतीत्यर्थः । अथवा-अयं पुलकः, न उदास्ते=न उत्तिष्ठति = न उद्गच्छतीति काकुः, अवश्यमेवोद्गच्छतीत्यर्थः, स एव=

---

( जगत् को हिला देनेवाली ) रावण की भुजाओं में घमण्ड प्रौढि पाता रहे । (जबतक भ्रुकुटि बाँधकर क्रोध की मुद्रा नहीं दिखलाई जाती और धनुष खींचा नहीं जाता, तबतक रावण सारे संसार में उपद्रव मचानेवाले अपने बाहुओं में घमण्ड को नचाता रहे-यह भाव है । ) वसन्ततिलका छन्द है ॥ ६ ॥

तो अङ्गद को दूत का काम दिया जाय अथवा दूत के काम की आज्ञा दी जाय ।

**राम**—[ अङ्गद को बहुत आदर के साथ देखकर ] वच्चे !

तुम्हारे पिता वाली ने बली रावण के विषय में जो ( विलक्षण ) कार्य किया, उसे कहने में हम समर्थ नहीं हैं । यह ( प्रत्यक्ष दिखाई पड़नेवाला ) रोमाञ्च उदासीन नहीं होता ( अर्थात् हमें उत्साही बनाकर हमसे कुछ काम कराना चाहता-

स एव त्वं व्यावर्तयसि तनुजत्वेन पितृतां
ततः किं वक्तव्यं तिलकय निसृष्टार्थपदवीम् ॥ ७ ॥

अङ्गदः—[ मौलिमण्डलमिलत्करयुगलेन प्रणम्य विज्ञापयति । ] देव !

---

वालिनः पुत्र एव, त्वम्=अङ्गदः, ( यदि ) तनुजत्वेन=पुत्रभावेन, पितृतां=जनकभावं, व्यावर्तयसि = परिवर्तयसि अर्थात् पुत्ररूपेण पितृरूपस्य विनिमयं कुर्वन् पुत्रो भूत्वा पितृवत् कार्यं करोषि, ततः=तर्हि, किं वक्तव्यं=किमु कथनीयमस्माभिः । निसृष्टार्थ-पदवीं, निसृष्टार्थस्य=उत्तमदूतस्य पदवीम्=उपाधिं मार्गं वा, तिलकय=विभूषयेति यावत् । निसृष्टार्थदूतलक्षणं यथा दर्पणे—

'उभयोर्भावमुन्नीय स्वयं वदति चोत्तरम् ।
सुश्लिष्टं कुरुते कार्यं निसृष्टार्थस्तु स स्मृतः' ॥

इति । (अयं भावः—'कदाचित्समुद्रतटे सन्ध्यावन्दनं कुर्वन् वाली दिग्विजयप्रसङ्गादुपागतं रावणं क्रोडे कृत्वा चतुरः समुद्रान् परिक्रम्य किष्किन्धामवतारयामासे'ति वालिनोऽद्भुतं पराक्रमं स्मरन्तो वयं रोमाञ्चिता उत्साहसम्पन्नाश्च भवामः । तस्यैव वालिनः पुत्रस्त्वं वालिवत् प्रशंसनीयं कार्यं कुर्याश्चेत् सुन्दरं स्यात् । अतो दूतकार्यं स्वीकुरुष्वेति । ) शिखरिणी वृत्तम् ॥ ७ ॥

प्रभोरादेशं निशम्याङ्गदो दौत्यं स्वीकुर्वन्नाह—मौलिमण्डलेत्यादि । मौलिमण्डल-

---

है । ) अथवा—यह रोमाञ्च उठता नहीं है क्या ? अर्थात् अवश्य ही रोएँ खड़े होरहे हैं । यदि वही तुम पुत्र के रूप से पिता का रूप बदलते हो ( अर्थात् पुत्र होकर पिता के समान कार्य करते हो ) तो क्या कहना होगा ? उत्तम दूत की उपाधि अथवा उसके मार्ग को अलङ्कृत करो । ( भाव यह है—'किसी समय समुद्र के तीर पर सन्ध्यावन्दन करते हुए वाली ने दिग्विजय के प्रसङ्ग से समीप आये हुए रावण को बगल में दबाकर चारों समुद्र की परिक्रमा करके किष्किन्धा में उतारा था' । इस प्रकार वाली के विचित्र पराक्रम का स्मरण करते हुए हम रोमाञ्चयुक्त तथा उत्साहसम्पन्न होरहे हैं । उसी वाली के पुत्र तुम वाली के समान प्रशंसनीय कार्य करोगे तो अच्छा होगा । अतः, दूत का काम स्वीकार करो । ) शिखरिणी छन्द है ॥ ७ ॥

अङ्गद—[ मस्तक के मूल में जुटते हुए दोनों हाथों से प्रणाम करके निवेदन करता है । ] महाराज !

किं प्राकारविहारतोरणवतीं लङ्कामिहैवानये
किं वा सैन्यमहं द्रुतं रघुपतेस्तत्रैव सम्पादये ।
आकल्पं कुलपर्वतैरविरलैर्बध्नामि वा सागरं
देवादेशय किं करोमि सकलं दोर्दण्डसाध्यं मम ॥ ८ ॥

---

मिलत्करयुगलेन, मौलिमण्डले=मस्तकमूले इति यावत्, मिलता करयुगलेन=बद्धेनाञ्जलिना, विज्ञापयति = निवेदयति । तथाहि—

किमिति । अहम् = अङ्गदः, प्राकारविहारतोरणवतीं, प्राकाराः = लङ्कावरणभित्तयः विहाराः = बौद्धमठाः क्रीडास्थानानि वा तोरणाः = बहिर्द्वाराणि च सन्त्यस्यामिति ताम्, बहुव्रीहिसमासेनैव कार्यसिद्धौ मतुप्प्रत्ययोऽयं व्यर्थप्राय एवात्र, लङ्कां = तन्नाम्नीं राजधानीम्, इहैव = सुवेलपर्वत एव, किम् आनये = उपस्थापये किमु ?, किंवा = अथवा, रघुपतेः = प्रभो रामचन्द्रस्य, सैन्यं = सेनां, तत्रैव = लङ्कायामेव, द्रुतं = शीघ्रं, सम्पादये = कुर्वे ?, वा = पक्षान्तरे, आकल्पं = प्रलयकालं यावत्, अविरलैः=समवेतैः, कुलपर्वतैः=महेन्द्रादिभिः सप्तभिः शैलैः, सागरं=समुद्रं, बध्नामि = संयतं करोमि । वाक्यत्रयेऽप्यत्र लटः स्थाने लोटः प्रयोगाः समीचीनाः . देव ! = हे नाथ ! आदेशय = आज्ञां कुरु, 'तत्करोती'ति णिच्, किं करोमि = अहं किं विदधे । सकलं = सर्वं, मम = मे अङ्गदस्य, दोर्दण्डसाध्यं, दोर्दण्डाभ्यां = भुजद्वयेन साध्यम् = कर्तुं योग्यमस्ति । (लङ्काऽऽनयन-सैन्यप्रस्थापन-समुद्रबन्धनेषु किं नाम कार्यं मया सम्पादनीयम् ? प्रभोराज्ञया निजभुजबलेन सर्वमहं कर्तुं समर्थोऽस्मीति भावः । ) शार्दूलविक्रीडितं वृत्तम् ॥ ८ ॥

---

घेरे की दीवालों से, बौद्धमठ अथवा क्रीडा के स्थानों से तथा बाहर के द्वारों से युक्त लङ्का को क्या मैं यहीं सुवेल पर्वत पर ले आऊँ ? अथवा प्रभु की सेना को शीघ्र वहीं लङ्का में कर दूँ ? किंवा प्रलय काल तक के लिए मिले हुए ( सात ) कुल पर्वतों से समुद्र को बाँध डालूँ ! नाथ ! आज्ञा दीजिए, मैं क्या करूँ ? सब कुछ मेरी भुजाओं से करने योग्य है । ( लङ्का ले आना-सेना ले जाना-समुद्र बाँधना-इनमें कौन सा काम मैं करूँ ? प्रभु की आज्ञा से अपने भुजबल द्वारा सब कुछ मैं कर सकता हूँ । ) शार्दूलविक्रीडित छन्द है ॥ ८ ॥

रामः—वत्स !

अज्ञानादथवाधिपत्यरभसादस्मत्परोक्षे हृता
सीतेयं प्रविमुच्यतामिति वचो गत्वा दशास्यं वद ।
नो चेल्लक्ष्मणमुक्तमार्गणगणच्छेदोच्छलच्छोणित-
च्छत्रच्छन्नदिगन्तमन्तकपुरं पुत्रैर्वृतो यास्यसि ॥ ९ ॥

अङ्गदवचनं श्रुत्वा रामः स्वीयमादेशं प्रकाशयति—वत्सेत्यादि । तदेवाह—**अज्ञानादिति** । ' अज्ञानात् = अविवेकात्, अथवा=किंवा, आधिपत्यरभसात् = प्रभुत्ववेगात्, 'अहं प्रभुरस्मी'ति गर्वादिति यावत्, अस्मत्परोक्षे, अक्षिभ्यां परं परोक्षम् अस्माकं परोक्षं तस्मिन् सर्वेषामस्माकमप्रत्यक्षरूपेण, हृता=चोरयित्वाऽऽनीता, इयं = त्वद्गृहस्था, सीता = जानकी देवी, प्रविमुच्यतां = त्यज्यताम् । नो चेत् = यद्येवं न क्रियते तर्हि, पुत्रैर्वृतः = पुत्रपदेनात्र परिवारो लक्ष्यते, सकलपरिवारसहितः, त्वमिति शेषः, लक्ष्मणमुक्तमार्गणगणच्छेदोच्छलच्छोणितच्छत्रच्छन्नदिगन्तं, क्रियाविशेषणमिदम्, लक्ष्मणेन = रामभ्रात्रा मुक्तानां = क्षिप्तानां मार्गणानां बाणानां गणेन = समूहेन यः छेदः = अङ्गानां खण्डनं तेन उच्छलन्ति = ऊर्ध्वं गगनं गच्छन्ति शोणितानि = रुधिराणि तान्येव छत्राणि = आतपत्राणि तैः छन्नाः=व्याप्ताः दिगन्ताः= दिशां प्रान्तभागा यस्मिन्कर्मणि तद्यथा भवति तथा, अन्तकपुरं = यमस्य नगरं, यास्यसि = गमिष्यसि" इति वचः = इदं सन्देशरूपं वचनं, गत्वा = समीपमुपस्थाय,

**राम**—ऐ बच्चे !

"अविचार अथवा प्रभुता के वेग से ( मैं प्रभु हूँ—इस गर्व से ) हम लोगों के आँख पीछे हरी हुई (तुम्हारे घर में स्थित) सीता को तुम छोड़ दो) नहीं तो, लक्ष्मण के छोडे हुए बाणों से ( अवयवों के ) कट जाने के कारण ऊपर ( आकाश में ) उछलते हुए रक्तरूपी छत्रों से दिशाओं को व्याप्त करते हुए तुम परिवार के सहित यमराज के नगर सिधारोगे ।" यह बात जाकर रावण से कह दो । ( एकान्त में हरी हुई सीता रामचन्द्र जी को लौटा दो । नहीं तो, लक्ष्मण के बाणों से तुम सबों के शरीर कट जायँगे और वेग के साथ आकाश में फैलते हुए उस रक्त से सारी दिशाएँ भर जायँगी । उस समय पृथ्वी पर रक्तमय छत्रच्छाया सी हो जायगी । इस प्रकार सपरिवार तुम नष्ट हो जाओगे—यही रावण से सन्देश वचन कहो । ) शार्दूलविक्रीडित छन्द है ॥ ९ ॥

अङ्गदः—देव !

सन्धौ वा विग्रहे वापि मयि दूते दशाननी ।
अक्षता वा क्षता वापि क्षितिपीठे लुठिष्यति ॥ १० ॥

रामः—साधु भो वालिनन्दन ! साधु । [ इति पृष्ठे हस्तं दत्त्वा विसृजति । ]

---

दशास्यं = रावणं, वद = कथय । ( एकान्ते हृतां सीतां रामाय प्रत्यर्पय, अन्यथा लक्ष्मणबाणैर्वः सर्वेषां शरीराणि छिन्नानि भवेयुराकाशे सवेगं प्रसरता च तेन रक्तेन सर्वा दिशो व्याप्ता भवेयुः । तदानीं पृथिव्यां रक्तमयच्छत्रच्छायेव भविष्यति । सपरिवारस्त्वमेवं विनङ्क्ष्यसीत्येवं रावणं प्रति सन्देशवचनं ब्रूहीति भावः । ) शार्दूलविक्रीडितं वृत्तम् ॥ ९ ॥

रामाज्ञावचनमाकर्ण्याङ्गदः कथयति—देवेति ।

सन्धाविति । मयि = अङ्गदे, दूते = सन्देशहारके सञ्जाते, सन्धौ वा=सन्धाने वा, विग्रहेऽपि वा = युद्धेऽपि वा सति, अक्षता वा = अच्छिन्ना वा, क्षतापि वा = छिन्नापि वा सती, ( रावणस्य ) दशाननी, दशानाम् आननानां = मुखानां समाहारः, द्विगुसमासोऽयम् , क्षितिपीठे = पृथिव्यासने, लुठिष्यति = नम्रीभविष्यति पतिष्यति वा । (अयमाशयः–भवता सह सन्धौ सति रावणस्य दशापि मुखान्यच्छिन्नानि भूत्वा भवत्प्रणामाय पृथिव्यां नम्राणि भविष्यन्ति, अथवा युद्धे सति छिन्नानि भूत्वा तानि पृथिव्यां निपतिष्यन्ति । ) अनुष्टुब् वृत्तम् ॥ १० ॥

अङ्गदेनैवमुक्ते सति रामस्तं प्रशंसन्नाह—साध्विति । साधु = सम्यक् , द्विरुक्तिरत्र साधुपदस्य साधुत्वातिशयं द्योतयति । 'पृष्ठे हस्तं दत्त्वे'ति गौरवं प्रदर्शयति । विसृजति = प्रेषयति ।

---

अङ्गद—देव !

मेरे दूत बनने पर, सन्धि अथवा युद्ध होने से कटा हुआ अथवा न कटा हुआ ( रावण के ) दसो मुखों का समूह पृथ्वी रूपी आसन पर झुका रहेगा अथवा गिरेगा । ( भाव यह है–आप से सन्धि होने पर रावण के दसो मुख न कटकर आपको प्रणाम करने के लिए पृथ्वी पर झुके रहेंगे अथवा युद्ध होने पर कटकर वे पृथ्वी पर गिर जायँगे । अनुष्टुप् छन्द है ॥ १० ॥

राम—ठीक, वाली के पुत्र ! ठीक है । [इस प्रकार पीठ पर हाथ देकर भेजते हैं ।]

[ अङ्गदः प्रणम्य निष्क्रान्तः । ]

सुग्रीवः—[ लङ्काशैलशिखरमालोक्य ] देव ! पश्य पश्य ।

सावज्ञमिव सम्पश्यन्कपिवीरवरूथिनीम् ।
निजांसे दशकण्ठोऽयं धत्ते मत्तेभवद्दृशम् ॥ ११ ॥

तदागच्छत । वयमपि सुवेलशैलवनतिलकितानि जलनिधेस्तटानि पश्यामः ।

[ इति निष्क्रान्ताः । ]

---

प्रणामपूर्वकं ततः प्रस्थानमङ्गदस्य सूचयति—**अङ्गद** इति ।

ततः सुग्रीवो लङ्कापर्वताग्रं पश्यंस्तत्र स्थितं रावणं वर्णयिष्यन्नाह रामम्—**देवेति** । पश्य पश्येति द्विरुक्तिः सम्भ्रमे । किं तद्वचनमित्याह—

**सावज्ञमिवे**ति । अयं = पुरो दृश्यमानः, दशकण्ठः = रावणः, कपिवीरवरूथिनीं, कपिषु = वानरेषु वीराः = शूराः तेषां वरूथिनीं = सेनां, सावज्ञमिव = नूनम् अनादरेण सह, सम्पश्यन् = अवलोकयन् सन् , निजांसे = आत्मनः स्कन्धे, मत्तेभवत्, मत्तः = मदोत्कटः इभः = हस्ती स इव, दृशं = दृष्टिं, धत्ते = निक्षिपति । ( वानरेषु तुच्छत्वभावं दधद्रावणः स्वात्मनि महान्तमभिमानभावं व्यनक्तीति भावः । अनुष्टुब् वृत्तम् । ) ॥ ११ ॥

**तदि**ति । तत् = तस्मात्कारणात् , तिलकितानि = सञ्जाततिलकानि विभूषितानीति यावत् , 'तदस्य सञ्जातं तारकादिभ्य इतच्' इतीतच् प्रत्ययः । ( अत आगम्यताम् , सुवेलपर्वतस्य काननैः सुन्दराणि समुद्रस्य तीराण्यस्माभिर्दृश्यन्तामित्यर्थः । )

---

[ अङ्गद प्रणाम करके निकल गया । ]

**सुग्रीव**—[ लङ्का के पहाड़ की चोटी देखकर ] श्रीमन् ! देखिए, देखिए—

यह सामने दिखाई पड़नेवाला रावण, वीर वानरों की सेना को मानों निरादर से देखता हुआ अपने कंधे पर मतवाले हाथी के समान दृष्टि डाल रहा है । (अर्थात् वानरों में तुच्छता का भाव रखता हुआ रावण अपने विषय में बड़े भारी अभिमान भाव को व्यक्त कर रहा है । ) अनुष्टुप् छन्द है ॥ ११ ॥

तो आइए, हम लोग भी सुवेल पर्वत के जंगलों से सुन्दर समुद्र के किनारों को देखें ।

[ इस प्रकार ( कहकर ) चले गए । ]

[ ततः प्रविशति रावणो मन्दोदरी विभीषणादिकश्च परीवारः । ]

रावणः—[ विभीषणं प्रति ] वत्स ! विभीषण !

एते ते मम बाहवः सुरपतेर्दोर्दण्डकण्डूहराः
सोऽहं सर्वजगत्पराभवकरो लङ्केश्वरो रावणः ।
सेतोर्बन्धमिमं शृणोमि कपिभिः पश्यामि लङ्कां वृतां
जीवद्भिस्तु न दृश्यते किमथवा किं वा नहि श्रूयते ? ॥ १२ ॥

---

कविरिदानीं रावणं मन्दोदरीं विभीषणादिकं च परिवारं प्रवेशयन् वक्तुमुपक्रमते—**ततः प्रविशतीत्यादि** ।

विभीषणमुद्दिश्य रावणः कथयति—**वत्सेति** । तदेव रावणस्य वचनमाह—

**एते त** इति । सुरपतेः = इन्द्रस्य, दोर्दण्डकण्डूहराः, दोर्दण्डयोः = लम्बमानयोर्भुजयोः कण्डूं = खर्जूं हरन्ति = दूरीकुर्वन्ति ये तादृशाः, एते=पुरो दृश्यमानाः, ते= प्रसिद्धा बलशालिनः, मम = रावणस्य, बाहवः = भुजाः, सन्तीति शेषः । सः = प्रसिद्धः, अहम् , सर्वजगत्पराभवकरः, सर्वजगतां = सकलानां भुवनानां पराभवं = पराजयं करोति = विदधातीत्येतादृशः, लङ्केश्वरः = लङ्काया अधिपतिः, रावणः = रावयतीति सः तन्नामकः, अस्मीति क्रियाक्षेपः । अहम् , इमं=पुरोवर्तिनं, सेतोः= पारगमनसाधनस्य, बन्धं = रचनां, शृणोमि = आकर्णयामि । लङ्कां = तदाख्यां मम राजधानीं, कपिभिः = वानरैः, वृतां = व्याप्तां, पश्यामि = अवलोकयामि । जीवद्भिः = जीवनं वहद्भिः पुरुषैस्तु, किं न दृश्यते = किमु नावलोक्यते ? अथवा =

---

[ तब रावण, मन्दोदरी, तथा विभीषण आदि परिवार ( ये सब ) प्रवेश करते हैं । ]

**रावण**—[ विभीषण से ] बच्चे ! विभीषण !

इन्द्र के बाहुदण्डों की खाज मिटानेवाली ये प्रसिद्ध ( बलशाली ) मेरी भुजाएँ हैं । वह मैं सारे जगत् को हरानेवाला लङ्का का राजा रावण हूँ । मैं यह ( सामने की ) पुल की रचना सुन रहा हूँ तथा लङ्का वानरों से घिरी हुई देख रहा हूँ । जीवित रहते हुए मनुष्य क्या नहीं देखते अथवा क्या नहीं सुनते ? अर्थात् सब कुछ देखते और सुनते हैं । ( इन्द्र के मद का मर्दन करनेवाला और जगत् को जीतनेवाला लङ्का का राजा मैं भी, समुद्र पर पुल का बँधना तथा लङ्का पर वानरों का आक्रमण होना—इसका प्रत्यक्ष अनुभव कर रहा हूँ । सच ही है, जीवनकाल में सब कुछ देखा वा सुना जाता है । ) शार्दूलविक्रीडित छन्द है ॥ १२ ॥

अपि च ।

जम्भारातीभकुम्भस्थलदलनपटुश्चन्द्रहासाभिधानः
खड्गः किं तापसस्य श्रवणविषयतां न प्रयातो मदीयः ? ।
यन्नासौ मेघनादप्रभृतिभटशतैर्व्यावृतां वेत्ति लङ्कां
तन्नूनं सत्यमेतत्प्रचलति हि मतिः प्राप्तकालस्य जन्तोः ॥ १३ ॥

---

पक्षान्तरे, किंवा = किमुत्र, नहि श्रूयते = नैवाकर्ण्यते ? अपि तु सर्वं दृश्यते श्रूयते चेत्यर्थः । ( इन्द्रमदमर्दनो जगद्विजयी लङ्केश्वरोऽप्यहं सागरे सेतो रचनां लङ्कायां वानराणामाक्रमणं चेति प्रत्यक्षमनुभवामि । सत्यमेव, जीवनकाले सर्वमपि दृष्टं श्रुतं वा भवतीति भावः । ) शार्दूलविक्रीडितं वृत्तम् ॥ १२ ॥

अपिच = किञ्च ।

**जम्भारातीति** । जम्भारातीभकुम्भस्थलदलनपटुः, जम्भारातेः=जम्भनाम्नोऽसुरस्य शत्रोः इन्द्रस्य इभः = गज ऐरावतः तस्य कुम्भस्थलयोः = कर्णसमीपस्थयोः शिरसः पिण्डभागयोः दलने = मर्दने पटुः = निपुणः, चन्द्रहासाभिधानः, चन्द्रहास इति अभिधानं = नाम यस्य सः, मदीयः = मत्सम्बन्धी, खड्गः = कृपाणः, तापसस्य= तपस्विवेषधारिणो रामस्य, श्रवणविषयतां = कर्णयोर्गोचरत्वं, न प्रयातः किं = न प्राप्तः किमु ?, यत् = यस्मात्कारणात्, असौ = तापसो रामः, लङ्कां = तन्नाम्नीं मम राजधानीं, मेघनादप्रभृतिभटशतैः = मेघनादादिभिः शतशो वीरैः, व्यावृतां = समन्ततो व्याप्तां, न वेत्ति = न जानाति । तत् = तस्मात्कारणात्, एतत् = इदं वक्ष्यमाणं, नूनं = निश्चयेन, सत्यं = तथ्यमस्ति, हि = यत्, प्राप्तकालस्य, प्राप्तः = उपस्थितः कालः = मृत्युसमयो यस्येत्येतादृशस्य, जन्तोः = प्राणिनः, मतिः = बुद्धिः,

---

और भी—

इन्द्र के हाथी ऐरावत के कुम्भस्थलों का मर्दन करने में निपुण चन्द्रहास नामक मेरे खड्ग को क्या तपस्वी ( राम ) ने नहीं सुना है ? जो यह राम लङ्का को मेघनाद आदि सैकड़ों वीरों से चारो ओर व्याप्त हुई नहीं जानता है । इसलिए यह निश्चय सत्य है कि मरनेवाले की बुद्धि भ्रष्ट हो जाती है । ( स्पष्टार्थ यह है-मेरे खड्ग के पराक्रम को तथा वीरों से रक्षित लङ्का को राम नहीं जानता है । इससे स्पष्ट है कि-विनाश के समय मनुष्य विपरीत-बुद्धि वाला हो जाता है । ) स्रग्धरा छन्द है ॥ १३ ॥

यदाखण्डलदर्पेन्दुराहवो बाहवो मम ।
द्रुह्यन्ति तापसेभ्योऽपि तदरिष्टमहो ! महत् ॥ १४ ॥

**मन्दोदरी**—[ स्वगतम् ]

तं ज्जेव्व अज्ज वि गले गरलं गव्वस्स वरिसए एस ।

---

प्रचलति = भ्रश्यति । ( स्पष्टार्थस्तु–मम खड्गस्य पराक्रमं वीरैः सुरक्षितां लङ्कां च न जानाति रामचन्द्र इत्यनेन स्पष्टं 'विनाशकाले विपरीतबुद्धिर्मनुष्यो भवती'ति । ) स्रग्धरा वृत्तम् ॥ १३ ॥

**यदिति** । आखण्डलदर्पेन्दुराहवः, आखण्डलस्य = इन्द्रस्य दर्पः = गर्व एव इन्दुः=चन्द्रः तस्मै राहवः = राहुस्वरूपाः, मम = रावणस्य, बाहवः = भुजाः, यत् = यस्मात्कारणात्, तापसेभ्योऽपि = अकिञ्चित्करेभ्यः तपस्विभ्योऽपि, द्रुह्यन्ति = अपकुर्वन्ति, विरुध्यन्तीत्यर्थः, तत् = तस्मात्कारणात्, अहो इति खेदे, महत्=बृहत् विशालम्, अरिष्टम् = अशुभम्, अर्थात् तापसानामेव, भविष्यतीति शेषः । (इन्द्रदर्पच्छिदां मद्भुजानां साधारणैस्तापसैः सह द्रोहस्तेषामेव महदशुभं जनयिष्यतीति भावः । ) अनुष्टुब् वृत्तम् ॥ १४ ॥

रावणस्य गर्वपूर्णामेतामुक्तिं श्रुत्वा मन्दोदरी मनस्याह–**स्वगत**मित्यादि । स्वगतं=कश्चिदपि नश्रोतुं योग्यम् । तल्लक्षणं च–'अश्राव्यं स्वगतं मत'मिति । तथाहि–

**तं ज्जेव्व** इति । एषः=मत्पतिः रावणः, अद्यापि=वर्तमानसमयेऽपि, गर्वस्य = अहङ्कारस्य, तदेव = हानिकरमिति यावत्, गरलं = विषं, गले=कण्ठे वर्षति=अवतारयति, येन = विषेण, राक्षसकुले = राक्षसानां वंशे, शोकाङ्कुरकुड्मलाः, शोकाङ्कुराणां = शोकरूपाणां नूतनप्ररोहाणां कुड्मलाः = ईषद्विकसिताः कलिकाः, जाग्रति=

---

इन्द्र के गर्वरूपी चन्द्रमा के लिए राहुस्वरूप मेरी भुजाएँ ( कुछ न कर सकने वाले ) तपस्वियों से भी जिस कारण द्रोह करती हैं, खेद है, उस कारण ( उन तपस्वियों का ही ) महान् अशुभ ( होगा ) । ( इन्द्र के घमण्ड को तोड़ने वाली मेरी भुजाओं का साधारण तपस्वियों से भी द्रोह करना उन्हीं तपस्वियों का बड़ा अमङ्गल उत्पन्न करेगा । ) अनुष्टुप् छन्द है ॥ १४ ॥

**मन्दोदरी**—[ अपने मन में ]

ये ( मेरे पतिदेव ) आज भी घमण्ड के उसी जहर को गले में बरसा रहे हैं, जिस जहर से राक्षसों के वंश में शोकरूपी अङ्कुरों की कलियाँ विकसित होरही हैं ।

जग्गन्ति जेण रक्खसकुलम्मि सोअङ्कुरकुडम्पा ॥ १५ ॥

[ प्रकाशम् ] णाह ! पेक्ख पेक्ख । अचरिअं अचरिअम् ।

विलसिदसरोसवानरवरूहिणीकलअलस्स कल्लोला ।

इह तुह विलासवासम्मि वीर ! विरअन्ति पडिसद्दम् ॥ १६ ॥

( तदेवाद्यापि गले गरलं गर्वस्य वर्षत्येषः ।

जाग्रति येन राक्षसकुले शोकाङ्कुरकुड्मलाः ॥ १५ ॥

नाथ ! पश्य पश्य । आश्चर्यमाश्चर्यम् ।

विलसितसरोपवानरवरूथिनीकलकलस्य कल्लोलाः ।

इह तव विलासवासे वीर ! विरचयन्ति प्रतिशब्दम् ॥ १६ ॥ )

**रावणः**—[ सावज्ञम् ] देवि ! प्रकृतिप्रियवादिनि ! अलमलमनया

---

स्फुरन्ति । ( अद्याप्येषोऽभिमानपूर्णां वाचं वदति, येन राक्षसाः शोकाकुला भवन्तीत्यर्थः । ) आर्या वृत्तम् ॥ १५ ॥

पुनः प्रकाशरूपेण मन्दोदरी ब्रूते—**णाह** इति । 'पेक्ख पेक्ख, अचरिअं अचरिअं' इति सम्भ्रमे द्विरुक्ती ।

**विलसितेति** । हे वीर = हे शूर ! विलसितसरोषवानरवरूथिनीकलकलस्य, विलसिताः = सुशोभिताः युद्धचेष्टान्विताः सरोषाः = क्रोधसहिताश्च ये वानराः = मर्कटाः तेषां वरूथिन्याः = सेनायाः कलकलस्य = कोलाहलस्य, कल्लोलाः = महान्तस्तरङ्गाः, इह=अत्र, तव = ते, विलासवासे = विहारभवने, प्रतिशब्दं = प्रतिध्वनिं, रचयन्ति = कुर्वन्ति । ( लङ्कायां वानरी सेना तारस्वरेण गर्जतीति भावः । ) आर्या वृत्तम् ॥ १६ ॥

मन्दोदर्या वचः श्रुत्वा रावणोऽनादरपूर्वकं ब्रूते—**देवीति**। प्रकृतिप्रियवादिनि !,

---

( अभी तक ये अभिमान भरी बोली बोलते हैं, जिससे राक्षस लोग शोकाकुल होरहे हैं । ) आर्या वृत्त है ॥ १५ ॥

[ प्रकाश रूप से ] स्वामी ! देखिए देखिए । आश्चर्य है आश्चर्य है ।

हे वीर ! सुशोभित ( युद्ध की चेष्टाओं से युक्त ) और कुपित वानरों की सेना के कोलाहल की बड़ी लहरें यहाँ आपके विहार-गृह में प्रतिध्वनि उत्पन्न कर रही हैं । (अर्थात् वानरों की सेना लङ्का में जोरों से गरज रही हैं ।) आर्या वृत्त है ॥१६॥

**रावण**—[ अनादर के साथ ] स्वभाव से प्रिय बोलने वाली हे महारानी !

मर्कटकीटकोलाहलविभीषिकया। किमन्यपरं वक्तुकामासि?

**मन्दोदरी—**

अज्ज वि ण कोवि दोसो रहुपहुणो देव! देहि वैदेहीम्।
मन्दोदरीअ मण्डणमखण्डभावं समब्भेदु॥ १७॥
(अद्यापि न कोऽपि दोषो रघुप्रभवे देव! देहि वैदेहीम्।
मन्दोदर्या मण्डनमखण्डभावं समभ्येतु॥ १७॥)

---

प्रकृत्या = स्वभावेन प्रियम् = अभीष्टं वदति = ब्रवीति या तत्सम्बुद्धौ, हे प्रियभाषणस्वभावे! मर्कटकीटकोलाहलविभीषिकया, मर्कटाः = वानरा एव कीटाः = अनादरपात्रं कृमयः तेषां कोलाहलेन = कलकलेन या विभीषिका = भयप्रदर्शनं तया, अलमिति वारणार्थे 'अलम् अलम्' इत्येषा द्विरुक्तिरवधारणे। वक्तुकामा, वक्तुं = कथयितुं कामः=अभिलाषः यस्याः सा, 'तुं काममनसोरपी'ति मकारलोपः। (देवि! प्रियभाषणं तव स्वभावोऽस्ति। वानराः कीटा इवाऽगणनीयाः, तेषां कोलाहलेन यद्भयं प्रदर्श्यते त्वया, तद्वार्यताम्। भयस्य किमपि कारणं नास्त्येवेति भावः।) किञ्चिदन्यदपि किं त्वं वक्तुमिच्छसि?

ततो मन्दोदरी स्वाभिमतं कथयति—

अज्जवि इति। हे देव = स्वामिन्! अद्यापि = एतत्कालावधि, कोऽपि=कश्चिदपि, दोषः = दूषणम् अनौचित्यमिति यावत्, न = नास्ति। रघुप्रभवे = रघूणां स्वामिने रामचन्द्राय, वैदेहीं = विदेहस्य = जनकस्य पुत्रीं सीतां, देहि = समर्पय। येनेति शेषः, मन्दोदर्याः = त्वत्पत्न्याः मम, मण्डनं = भूषणं सौभाग्यम्, अखण्डभावम् = अक्षतरूपत्वं, समभ्येतु = प्राप्नोतु। (रामाय सीतां दत्त्वा मत्सौभाग्यं सुरक्षितं करोतु भवानित्याशयः।) आर्या वृत्तम्॥ १७॥

---

बन्दररूपी कीड़ों के कोलाहल से यह जो भय दिखलाया जा रहा है, उसे छोड़ ही दो। (भय का कोई कारण नहीं है।) क्या और भी कुछ कहने के लिए तुम इच्छुक हो?

**मन्दोदरी—**अब तक कुछ अनुचित नहीं है। रामचन्द्र को सीता दे दीजिए। (जिससे), मन्दोदरी का भूषण (सौभाग्य) अखण्ड रूप को प्राप्त होवे। (राम को सीता देकर मेरे सौभाग्य की रक्षा करें।) आर्या वृत्त है॥ १७॥

**रावणः**—[ सकोपहासम् ] देवि !

एकं तावदकृत्यमेतदतुलं यन्मैथिलीयं हृता
द्वैतीयीकमिदं विमृश्य यदसौ तस्मै तदा नार्पिता ।
तार्तीयीकमिदं तु यत्कपिभटैर्बद्धेऽद्य वारां निधौ
सन्धानं दशकन्धरो रचयति क्ष्मानन्दिनीमर्पयन् ॥ १८ ॥

---

मन्दोदर्या वचनमाकर्ण्य रावणः सक्रोधं सहासं च कथयति—**देवीति** । तथाहि—
**एकमिति** । एकं तावत् = प्रथमं तु, एतत् = इदम्, अतुलं, नास्ति तुला = सादृश्यं यस्य तत्, अकृत्यं=कर्तुमयोग्यम् अनुचितं कार्यमभवत्, यत्, इयं = रामस्य भार्या, मैथिली = सीता, हृता = चोरिता । द्वैतीयीकं = द्वितीयमनुचितम्, इदम् = एतदभूत्, यत्, तदा = तस्मिन् समये, विमृश्य = विचार्य असौ = सीता, तस्मै = रामाय, न अर्पिता = न दत्ता । इदं तु = एतत्पुनः, तार्तीयीकं = तृतीयमनुचितं भवेत्, यत्, अद्य = इदानीं, कपिभटैः = वीरैर्वानरैः, वारां निधौ = समुद्रे, बद्धे = बन्धनं प्रापिते तत्र सेतौ विरचिते सतीति यावत्, दशकन्धरः = दशग्रीवो रावणः, क्ष्मानन्दिनीं = भूमेः पुत्रीं सीताम्, अर्पयन् = ददत्, सन्धानं = सन्धि, रचयति=करोति । ( अयं भावः-सीता हृतेति प्रथमो दोषः, हृत्वापि सा तदैव न प्रत्यर्पितेति च द्वितीयः । दोषद्वयमिदं तु जातम् । परमिदानीमयं तृतीयो दोषः स्याद् यद्-वानरकृतसागरबन्धनानन्तरं समर्प्य सीतां रामेण सह सन्धेः करणम् । अतो विरोधमुद्भाव्य तमद्यावधि परिपाल्य च रामेण सह सन्धानमपमानजनकं हास्यास्पदं च भवेदितीदानीं सीतासमर्पणं नोचितम् । ) शार्दूलविक्रीडितं वृत्तम् ॥ १८ ॥

---

**रावण**—[ क्रोध और हँसी के साथ ] रानी ! एक तो उपमारहित अनुचित कार्य यह हुआ, जो सीता हरी गई, दूसरा अनुचित यह हुआ, जो उस समय विचार करके राम को वह नहीं दी गई । यह फिर तीसरा अनुचित ( होगा ) कि आज वीर वानरों द्वारा समुद्र के बँध जाने पर रावण सीता को अर्पित करता हुआ सन्धि कर लेता है । ( भाव यह है—सीता का हरण किया-यह पहला दोष, हरण करके भी उसे उसी समय नहीं लौटा दिया-यह दूसरा दोष । ये दो दोष तो हो गये । पर अब यह तीसरा दोष होगा, कि वानरों द्वारा समुद्र-बन्धन के बाद सीता देकर राम से सन्धि करना । अतः विरोध को उत्पन्न कर और अब तक उसका पालन करके, राम के साथ मिलना अपमानजनक तथा हास्यास्पद होगा-इस कारण अब सीता को अर्पित करना उचित नहीं है । ) शार्दूलविक्रीडित छन्द है ॥ १८ ॥

तदवतंसयतु भवती विलासगृहम् ।

[ इति मन्दोदरी वाष्पं विसृजन्ती निष्क्रान्ता । ]

**रावणः**—[ विभीषणं प्रति ] **वत्स ! विभीषण ! तवापि किमपि वक्तव्यमस्ति ?**

**विभीषणः**—**देव ! लङ्केश्वर ! विचारय नयचक्षुषा ।**

**मनुष्यौ न मनुष्यौ तौ वानरास्ते न वानराः ।**

**व्याजेन किमपि च्छन्नं देव ! दुर्दैवमेव ते ॥ १९ ॥**

---

**तदिति** । तत् = तस्मात्कारणात्, अवतंसयतु=अलङ्करोतु । अवतंसः कर्णभूषणम्, अत्रतु सामान्यं भूषणं ग्राह्यम् । विलासगृहं = विहारभवनम् । अतो विहारमन्दिरं प्रति गम्यतां भवत्येत्यर्थः ।

रावणवचनश्रवणाद्दुःखिताया रुदत्या मन्दोदर्यास्ततः प्रस्थानं दर्शयति—**इतीत्यादि** । इति = पूर्वोक्तं रावणवचनं श्रुत्वेत्यर्थः, वाष्पं विसृजन्ती=रोदनं कुर्वती ।

मन्दोदरीं स्वप्रतिकूलां बुद्ध्वा विभीषणमपि परीक्षमाणो रावणः प्राह—**वत्सेति।**

**तवापीति** । त्वमपि किञ्चिद्वक्तुमिच्छसि ?

विभीषणः कथयति—**देवेति** । नयचक्षुषा = नीतिरूपेण नेत्रेण । नीतिपूर्वकं विचारं कुरुष्वेत्यर्थः ।

**मनुष्याविति** । तौ=प्रसिद्धौ, मनुष्यौ = नरौ रामलक्ष्मणौ, मनुष्यौ = नरौ, न=न स्तः, ते=रामदूताः, वानराः=मर्कटाः, वानराः = मर्कटाः, न = न सन्ति, हे देव = स्वामिन् ! व्याजेन = अनेन कपटेन, ते = तव, दुर्दैवमेव = दुष्टं भाग्यमेव,

---

तो आप विहार-गृह को सुशोभित करें ।

[ यह ( सुन कर ) आँसू गिराती हुई मन्दोदरी निकल गई । ]

**रावण**—[ विभीषण से ] बच्चे विभीषण ! तुम्हें भी कुछ कहना है ?

**विभीषण**—महाराज ! लङ्का के राजा ! नीति की दृष्टि से विचार कीजिए । वे दो प्रसिद्ध मनुष्य (राम लक्ष्मण) मनुष्य नहीं हैं, वे बन्दर (रामदूत) बन्दर नहीं हैं। हे नाथ ! ( इस ) बहाने आपका दुर्भाग्य ही कुछ घिर आया है । ( राम लक्ष्मण को मनुष्य और बन्दरों को बन्दर नहीं समझना चाहिए । इसमें रहस्य है । वे सब देवरूप हैं । मैं समझता हूँ—इस रूप से आपका दुर्भाग्य ही उपस्थित है । ) अनुष्टुप् छन्द है ॥ १९ ॥

तदियं मुच्यतां राक्षसकुलकालरात्रिर्जानकी ।

रावणः—[ सरोषं खड्गमादाय ] आः पाप ! प्रतिपक्षपक्षपातिन् ! कुलाङ्गार ! दुराचार ! एष ते चन्द्रहासेन शिरः पातयामि । [ इति संरभते । ]

[ विभीषणश्च सभयमपसरति । ]

---

किमपि = किञ्चित्, छन्नम् = आवृतमस्ति । ( रामलक्ष्मणौ मनुष्यरूपौ वानराश्च वानररूपा न मन्तव्याः ! अत्रास्ति रहस्यम् । सर्वे ते देवरूपाः सन्ति । मन्येऽहमेतद्रूपेण भवतो दुर्भाग्यमेवोपस्थितमिति । ) अनुष्टुब् वृत्तम् ॥१९॥

तदियमिति । तत् = तेन हेतुना, राक्षसकुलकालरात्रिः, राक्षसकुलस्य = राक्षसानां वंशस्य कालरात्रिः=कालः संहारो मरणं तदुपलक्षिता रात्रिः, संहारकारिणी शक्तिरित्यर्थः । ( राक्षसवंशविच्छेदकर्त्रीं सीतामेतां परित्यजतु भवानिति भावः । )

विभीषणभाषितं श्रुत्वा कुपितो रावणः खड्गपाणिः प्राह—आः पापेति । पापमस्यास्तीति पापः तत्सम्बुद्धौ, अर्शआदिभ्योऽच्, प्रतिपक्षपक्षपातिन्, प्रतिपक्षे= विरुद्धपक्षे पक्षपातिन् = प्रेमयुक्त, अत इनिठनौ, कुलाङ्गार, कुलस्य = राक्षसवंशस्य अङ्गारः = ज्वलत्काष्ठं तद्रूप, चन्द्रहासेन = खड्गेन । संरभते = उत्सहते उद्यतो भवति, अथवा क्रोधं करोति । रे नीच ! विरुद्धपक्षप्रेमपूर्ण ! कुलनाशक ! दुष्कर्मकारिन् ! एषोऽहं तव मस्तकं खड्गेन छिनद्मि । इति = इत्थं, वदन्निति शेषः, शिरश्छेत्तुमुद्यतो भवति क्रुद्धो वा भवतीत्यर्थः ।

रावणं शिरश्छेत्तुमुद्यतं दृष्ट्वा भयार्तस्य विभीषणस्य ततः प्रस्थानं कथयति—विभीषणश्चेति ।

---

अतः राक्षसकुल की कालरात्रि ( राक्षसों का संहार करने वाली ) यह सीता छोड़ दी जाय ।

रावण—[ क्रोध के साथ खड्ग लेकर ] पापी ! विरुद्ध पक्ष के प्रेमी ! कुलनाशक ! अरे ! दुराचारी ! यह मैं चन्द्रहास खड्ग से तुम्हारा सिर ( काटकर ) गिराता हूँ ।

[ इस प्रकार ( कहता हुआ ) सिर काटने को उद्यत होता है अथवा क्रुद्ध होता है । ]

[ विभीषण भय के साथ भाग जाता है । ]

**माल्यवान्**—[ अन्तराले भवन् ] देव ! लङ्केश्वर ! विचारय नयचक्षुषा। किमहितमभिहितं कुमारविभीषणेन ?

**रावणः**—भोः ! त्वमपीदृशः सम्पन्नः ?

[ माल्यवान्सभयं तूष्णीमास्ते । ]

**रावणः**—[ विभीषणं प्रति ] अरे बान्धवापसद ! परिहर मे राजधानीम् । तमेव च वनेचरमनुप्रविश्य प्रकाशय नीतिनैपुण्यम् । न पुनः कथाशेषं करिष्यामि ।

---

विभीषणं हन्तुमुद्यतं रावणं तस्मादकार्यान्निवारयन् माल्यवान्नाम मन्त्री ब्रूते—**अन्तराले भवन्नित्यादि** । अन्तराले = रावणविभीषणयोर्मध्ये, भवन् = तिष्ठन् । अहितं = हितविरोधि अनुचितम्, कुमारविभीषणेन=अनुजेन विभीषणेन । ( स्वामिन् रावण ! न्यायदृष्टया विचारं कुरुतां भवान् । अनुजो विभीषणः किमनुचितं कथितवान् । नूनं तदुक्तिर्विचारणीया । )

माल्यवन्तमपि विभीषणोक्तेरेव समर्थकं दृष्ट्वा ततो निराशः प्राह रावणः—**भोः** इति । ईदृशः = विभीषणेन सदृशः, सम्पन्नः = सञ्जातः ।

रावणोक्तं निशम्य माल्यवान् भयेन किमपि वक्तुं नेच्छति स्मेत्याह कविः—**माल्यवानित्यादि** । तूष्णीम् आस्ते = बद्धमौनस्तिष्ठति ।

रावणः पुनराह विभीषणं परिहर्तुमिच्छन्—**अरे** इति । बान्धवापसद = नीचबन्धो !, परिहर = त्यज । वनेचरं = वनवासिनं रामम् , अनुप्रविश्य = तदन्तः प्रवेशं कृत्वा, तेन सह सङ्गत्येत्यर्थः । न पुनः = नो चेत् , त्वामिति शेषः, कथाशेषं, कथा=

---

**माल्यवान्**—[ ( रावण और विभीषण के ) बीच में होता हुआ ] नाथ ! लङ्का के स्वामी ! न्याय की दृष्टि से विचार कीजिए। छोटे भाई विभीषण ने क्या अनुचित कहा ? ( निश्चय, उसकी बात विचार करने योग्य है ।)

**रावण**—अरे ! तुम भी ( विभीषण के ) ऐसे हो गये ?

[ माल्यवान् भय के साथ चुप रहता है । ]

**रावण**—[ विभीषण को लक्ष्य करके ] अरे नीच भाई ! मेरी राजधानी ( लङ्का ) को छोड़ दो और उसी राम के भीतर घुसकर अर्थात् उसी राम से मिल कर ( अपनी ) नीतिनिपुणता को प्रकाशित करो। नहीं तो ( तुम्हें ) कथाशेष अर्थात् जीवन-रहित कर दूँगा ।

**विभीषणः**—न भाव्यमन्यथा भवति । [ इति वदन्निष्क्रान्तः । ]

[ ततः प्रविशति प्रहस्ताभिधः प्रतीहारः । ]

**प्रहस्तः**—देव ! रामस्य दूतोऽहमिति ब्रुवाणः कोऽपि शाखामृगो द्वारमध्यास्ते ।

**रावणः**—[ सावज्ञम् ] प्रवेशय तावत् ।

[ ततः प्रविशति प्रहस्तेन सहाङ्गदः । ]

**अङ्गदः**—[ रावणमवलोक्य, स्वगतम् ]

---

नामोच्चारणमेव शेषः = अवशिष्टः यस्य तं, गतप्राणमिति यावत् । ( अयि ! नीच भ्रातः ! मद्राज्यान्निर्गच्छ । तेनैव रामेण सह सङ्गत्य स्वां नीतिनिपुणतां प्रदर्शय । इतो न यास्यसि चेत्त्वां हनिष्यामीति भावः । )

ततो गन्तुमिच्छन् विभीषणः प्राह = **न भाव्य**मिति । भाव्यं = भवितव्यम्, अन्यथा = तद्विपरीतं, न भवति = न जायते । ( भवितव्यता भवत्येवेति भावः । ) [ इति = पूर्वोक्तम् । ]

इत्थमत्र कविः कथाप्रसङ्गमुद्भाव्य साम्प्रतमङ्गदस्य तत्रोपस्थितिं सूचयिष्यंस्तदौपयिकं प्रहस्तनामकं द्वारपालं प्रवेशयति-**ततः प्रविशती**ति । प्रहस्ताभिधः = प्रहस्तनामकः, प्रतीहारः = द्वारपालः ।

प्रहस्तोक्तिं दर्शयति—**देवे**ति । ब्रुवाणः=वदन्, शाखामृगः=वानरः, अध्यास्ते= अधितिष्ठति । ( अहं रामचन्द्रस्य दूतोऽस्मीति वदन् कश्चिद्वानरो द्वारे तिष्ठतीत्यर्थः । )

अनादरपूर्वकं तत्प्रवेशमनुमन्यते रावणः-**प्रवेशये**ति । तावत्पदं वाक्यालङ्कारे ।

ततः प्रहस्तसहितस्याङ्गदस्य प्रवेशमाह—**ततः प्रविशती**त्यादि ।

---

**विभीषण**—भवितव्यता ( होनी ) बदलती नहीं अर्थात् अवश्य ही होती है ।

[ ऐसा कहता हुआ चला गया । ]

[ तब प्रहस्त नाम का द्वारपाल प्रवेश करता है । ]

**प्रहस्त**—नाथ ! 'राम का दूत हूँ' ऐसा कहता हुआ कोई बन्दर द्वार पर बैठा है ।

**रावण**—[ अनादर के साथ ] प्रवेश कराओ ।

[ तब प्रहस्त के साथ अङ्गद प्रवेश करता है । ]

**अङ्गद**—[ रावण को देखकर, अपने मन में ].

स एष जगदास्कन्दकौतुकी दशकन्धरः ।
यन्मौलिकमलारामे रामः च्तेप्ता शिलीमुखान् ॥ २० ॥

[ प्रकाशम् ]

रे राक्षसाः ! कथयत क्व स रावणाख्यो
रत्नं रवीन्दुकुलयोरपहृत्य नष्टः ।
त्रैलोक्यदीपनकरास्त्रशिखाकराले

रावणं पश्यतोऽङ्गदस्य मानसं वचनं प्रदर्शयति कविः—**स एष** इति । जगदास्कन्दकौतुकी. जगतः = संसारस्य आस्कन्दः = तिरस्कारः आक्रमणं युद्धं वा तत्र कौतुकं = कुतूहलम् अस्यास्तीति तादृशः, एषः = पुरो वर्तमानः, सः = प्रसिद्धः, दशकन्धरः = दशभिर्ग्रीवाभिर्युक्तो रावणः, अस्तीति शेषः । यन्मौलिकमलारामे, यस्य = रावणस्य मौलयः = मस्तकान्येव कमलानि = पङ्कजानि तेषाम् आरामे = उपवने, रामः = रघुपतिः, शिलीमुखान् = बाणान् भ्रमरान् वा, क्षेप्ता = पातयिष्यति । भविष्यत्कालिको लुटः प्रयोगोऽयम् । ( रामस्य बाणान् प्रतीक्षमाणो रावणोऽयं पुरस्तादास्त इत्यर्थः । ) अनुष्टुब् वृत्तम् ॥ २० ॥

**प्रकाश**मिति । प्रकाशरूपेण कथयतीत्यर्थः ।

**रे राक्षसा** इति । रे राक्षसाः = भो निशाचराः ! कथयत = ब्रूत, ( यत् ) रवीन्दुकुलयोः = सूर्यचन्द्रवंशयोः रामचन्द्रजनकयोः, रत्नं = रत्नरूपां श्रेष्ठां सीताम् , अपहृत्य = चोरयित्वा, सः रावणाख्यः = प्रसिद्धो रावणनामकः, क्व = कस्मिन्स्थाने, नष्टः = अदृष्टः गुप्तः वर्तते । यः = रावणः, त्रैलोक्यदीपनकरास्त्रशिखाकराले, त्रैलोक्यस्य = लोकत्रयस्य दीपनं = प्रकाशनं कुर्वन्तीति तेषाम् अस्त्राणाम् = आयुधानां

जगत् के तिरस्कार, आक्रमण अथवा युद्ध में कौतूहल रखनेवाला यह वह प्रसिद्ध रावण है, जिसके मस्तकरूपी कमलों के बाग में बाणरूपी भौंरों को रामचन्द्र जी गिराएँगे । ( अर्थात् राम के बाणों की प्रतीक्षा करता हुआ यह रावण सामने है । ) अनुष्टुप् छन्द है ॥ २० ॥

[ प्रकाश रूप से ]

ऐ निशाचरो ! बतलाओ, सूर्यवंश तथा चन्द्रवंश के रत्नस्वरूप सीता को चुराकर वह रावणनामधारी कहाँ छिप गया है ? जो, तीनों लोकों के प्रकाशक ( दिव्य ) अस्त्रों की ज्वालाओं से भयानक रामनाम-रूपी अग्नि में पतङ्ग होगा । ( भाव यह

यो रामनामदहने भविता पतङ्गः ॥ २१ ॥

[ बहवो राक्षसा रावणरूपं बिभ्रति । ]

अङ्गदः—

रे रे रावण ! रावणाः कति बहूनेतान्वयं शुश्रुम
प्रागेकं किल कार्तवीर्यनृपतेर्दोर्दण्डपिण्डीकृतम् ।
एकं नर्तनदापितान्नकवलं दैत्येन्द्रदासीजनै-

---

शिखाभिः = ज्वालाभिः कराले = भयङ्करे, रामनामदहने = रामचन्द्रनामस्वरूपेऽग्नौ, पतङ्गः = शलभः, भविता = भविष्यति । ( रामलीनो भविष्यन् रावणः सीतां हृत्वा कुत्र गुप्तस्तिष्ठतीत्येवं राक्षसैः सूचनीयमित्याशयः । ) वसन्ततिलका वृत्तम् ॥ २१ ॥

तदनन्तरं बहुभी राक्षसै रावणरूपं धृतमित्याह—**बहवो राक्षसा** इति ।

बहून् रावणान्पश्यन्नङ्गदो ब्रूते—

**रे रे रावणेति** । रे रे रावण = भो भो रावणनामधेय ! रावणाः = दशमुखाः, कति = कियन्तः कियत्संख्याकाः सन्ति ? वयम्, बहून् = बहुसंख्याकान् एतान् = रावणान्, शुश्रुम = आकर्णयामासिम, भूतकालिक उत्तमपुरुषप्रयोगोऽयं विचारणीयः । किल प्रसिद्धौ, प्राक् = पूर्वस्मिन्समये, एकं = प्रथमं रावणं, कार्तवीर्यनृपतेः= सहस्रार्जुनस्य राज्ञः, दोर्दण्डपिण्डीकृतं, दोर्दण्डयोः = लम्बमानभुजयोर्मध्ये पिण्डीकृतं= गाढं गृहीत्वा निष्पीडितम्, एकं = द्वितीयं रावणं, दैत्येन्द्रदासीजनैः, दैत्येन्द्रस्य = दैत्यानां प्रभोः बलिराजस्य दासीजनैः = सेविकालोकैः, नर्तनदापितान्नकवलं, नर्तनाय = नृत्यं कर्तुं दापितः = दातुं प्रेरितः अन्नकवलः = भोजनस्य ग्रासः यस्मै तम् । अत्र पूर्वत्र च वाक्ये 'शुश्रुम' इति क्रियायाः सम्बन्धो बोध्यः ।

---

है—भविष्यत्काल में राम में लीन होने वाला रावण सीता को हर कर कहाँ छिप बैठा है—यह राक्षस लोग सूचित करें । ) वसन्ततिलका छन्द है ॥ २१ ॥

[ बहुत से राक्षस रावण का रूप धारण करते हैं । ]

अङ्गद—अरे अरे रावण ! रावण कितने हैं? हमने तो बहुत से रावण सुने हैं । पहले एक रावण को, जो राजा सहस्रार्जुन के बाहुओं के मध्य में पकड़ कर दबाया गया था, और दूसरे को, जिसे राजा बलि की दासियों द्वारा नाचने के लिए भोजन का ग्रास दिलाया गया था, सुना है । एक तीसरे ( वाली से हराये गये ) रावण को कहने में भी हम लजाते हैं । तुम उन रावणों में कौन हो ? अथवा कोई दूसरे हो ?

रेकं वक्तुमपि त्रपामह इति त्वं तेषु कोऽन्योऽथवा ॥ २२ ॥

**रावणः**—[ बहुरूपाणि संहृत्य सहेलम् ] भो भोः शाखामृग ! कस्त्वं

---

एकं = तृतीयं रावणं वालिना पराजितमिति यावत्, वक्तुमपि = मुखादुच्चारयितुमपि, त्रपामहे = वयं लज्जामहे । इति = अतः, त्वं, तेषु = पूर्वोक्तेषु बहुषु रावणेषु, कः=कीदृक्कार्यकर्ता वर्तसे ? अथवा = पक्षान्तरे, अन्यः = तद्भिन्नः असि ? ( अङ्गदो रावणमेव पृच्छति–यदस्माभिः श्रुतेषु रावणेषु त्वं कीदृशो रावणः ? तदन्य एव वा कश्चिदसि ? पुरैको रावणो दिग्विजयप्रसङ्गेन राज्ञः सहस्रार्जुनस्य समीपं गतो बाहुसहस्रेण नर्मदाया जलं विपरीतं प्रवाहयतस्तस्य राज्ञो विलक्षणं पराक्रमं मेने ! तदैव कार्तवीर्येण राज्ञा बाहुमध्ये दृढं गृहीत्वा निष्पीडितोऽन्ते च कारागारे स्थापितः पश्चात्पितामहेन मोचितः । द्वितीयश्च पाताले राज्ञो बलेः समीपं प्राप्तो रावणस्तत्रत्याभिः सेविकाभिर्नर्तनपुरस्कारेण स्थापितं भोजनग्रासं गृहीत्वा नृत्यति स्म । तृतीयस्तु समुद्रतीरं गतो वालिना चतुरः समुद्रान् परिक्राम्यता सुचिरं भुजान्तरे धृत आसीत् । तन्नामोच्चारणमपि निन्दनीयं तथा लज्जाजनकमस्तीति त्वयैव स्वस्वरूपं प्रकटनीयमिति स्पष्टार्थः । ) शार्दूलविक्रीडितं वृत्तम् ॥ २२ ॥

अङ्गदप्रश्नानन्तरं रावणोक्तिरियम्—**बहुरूपाणीत्यादि** । बहुरूपाणि संहृत्य =

---

( स्पष्ट अर्थ यह है—अङ्गद रावण ही से पूछ रहा है कि हम लोगों द्वारा सुने गये बहुत से रावणों में तुम कैसे रावण हो ? अथवा उनसे दूसरे ही कोई हो ? पहले दिग्विजय के प्रसङ्ग से राजा सहस्रार्जुन के समीप गया हुआ एक रावण, हजारों बाहुओं द्वारा नर्मदा के जल को विपरीत रूप से बहाते हुए उस राजा के पराक्रम को विलक्षण समझा । उसी समय राजा कार्तवीर्य ने बाहुओं के बीच उसे दृढ़ता से पकड़ दवाया और अन्त में जेल खाने में रख दिया, बाद वह पितामह द्वारा छुड़ाया गया । और एक दूसरा रावण पाताल में राजा बलि के समीप पहुँचा हुआ, वहाँ की दासियों द्वारा नाचने के पुरस्कारस्वरूप रखे हुए भोजन के ग्रास ( कौर ) को लेकर नाचता था । एक तीसरा तो समुद्र के तीर पर गया हुआ, चारों समुद्रों की परिक्रमा करते हुए वाली के द्वारा बगल में बहुत समय तक रखा गया था । उसके नाम का उच्चारण भी निन्दा के योग्य तथा लज्जा को उत्पन्न करने वाला है । अतः तुम्हीं को अपना स्वरूप प्रकट करना चाहिए । ) शार्दूलविक्रीडित छन्द है २२

**रावण**—[ बहुत से रूपों को समेट कर खेलवाड़ अथवा अपमान के साथ ]

कस्यासि दूतः ?

**अङ्गदः**—

पितर्युपरते यस्तु नोद्वहेत्पैतृकीं धुरम् ।
तेन नैवोपदेष्टव्याः स्वस्य वंशस्य पूर्वजाः ॥ २३ ॥

तथापि भवतु ।

रक्षोदुर्भिक्षमाधातुमवतीर्णोऽस्ति यः क्षितौ ।

---

बहूनां स्वरूपाणामुपसंहारं कृत्वा, एकं स्वरूपमवलम्ब्य एक एव भूत्वेत्यर्थः, सहेलं= क्रीडया अपमानेन वा सह । ( भो भो इति । रे रे वानर ! किन्नामधेयः केन प्रेषितश्चासि । स्वं परिचयं प्रदेहीत्यर्थः । )

रावणवचनानन्तरमङ्गदोक्तिरियम्—

**पितर्युपरत** इति । यस्तु = यः पुनः, पुरुषः पितरि=जनके, उपरते=मृते सति, पैतृकीं=पितृसम्बन्धिनीं, धुरं = राज्यादिभारं, न उद्वहेत् = न धारयेत्, तेन=पुरुषेण, स्वस्य = आत्मनः, वंशस्य=कुलस्य, पूर्वजाः=पुरातनाः पुरुषाः, नैव=न कदाचित्, उपदेष्टव्याः=निर्देष्टव्याः, वर्णनीया इति यावत् । उपेत्युपसर्गोऽत्र विचार्यः । ( पूर्वजानां मार्गं परिहरता नरेण कुलमात्मनो न वर्णनीयमिति भावः । ) अनुष्टुब् वृत्तम् ॥२३॥

**तथापीति** । तथापि = एवं स्थितेऽपि, भवतु वर्णनमिति शेषः । अथवा—'भवतु, तथापी'त्यन्वयः । अत्रार्थे-किञ्चित्कथ्यत इति शेषः । तथाहि—

**रक्षोदुर्भिक्षमिति** । यः, रक्षोदुर्भिक्षं, रक्षसां = राक्षसानां दुर्भिक्षम् = अकालम् अभावम्, आधातुं = कर्तुं, विधातुमिति प्रयोगो युक्तः, क्षितौ = पृथिव्यां, सप्तमीयं विचार्या, अवतीर्णः = गृहीतावतारः, अस्ति=वर्तते, तस्य, रामस्य = दशरथनन्दनस्य, दूतः=सन्देशहरः, तस्य, वालिनश्च = वालिनाम्ना प्रसिद्धस्य वानराधिपतेश्च, सुतः=

---

अरे अरे बन्दर ! तुम कौन को ? किसके दूत हो ? ( अपना परिचय दो ) ।

**अङ्गद**—जो मनुष्य पिता के मरने पर उनके (राज्य आदि) भार को धारण न करे, उसको, अपने कुल के पूर्वजों को कभी नहीं बखानना चाहिए। (अर्थात् पूर्वजों के मार्ग को छोड़नेवाला मनुष्य अपने कुल का वर्णन न करे । ) अनुष्टुप् वृत्त है॥२३॥

फिर भी ( कुछ वर्णन ) हो । अथवा—अच्छा! तो भी ( कुछ कहा जाता है )।

राक्षसों का अकाल ( अभाव ) करने के लिए जो पृथ्वी पर अवतीर्ण हुए हैं, उन रामचन्द्रजी का दूत और उस प्रसिद्ध वाली का पुत्र मैं अङ्गद हूँ । ( भाव यह

तस्य रामस्य दूतोऽहं सुतस्तस्य च वालिनः ॥ २४ ॥

अपि च ।

तस्य रामस्य दूतोऽहं येन मे जनको हतः ।
वालिनस्तस्य पुत्रोऽहं यद्वीर्यानुभवस्तव ॥ २५ ॥

**रावणः**—[ अङ्गदं प्रति ] रामः किं कुरुते ?

---

पुत्रः, अहम् = अङ्गदः, अस्मीति योज्यम् । ( राक्षसानां समूलनाशार्थं यो विष्णुर्मनुष्यरूपं धृतवान् , भगवता तेन रामेण त्वत्समीपं प्रेषितोऽहं त्वद्विजेतुर्वालिनश्च पुत्रोऽस्मीति भावः । ) अनुष्टुब् वृत्तम् ॥ २४ ॥

**अपि च**—अन्यदपि ।

**तस्येति**। अहम्=अङ्गदः, तस्य=प्रसिद्धस्य, रामस्य=दाशरथेः, दूतः=सन्देशहरः, अस्मि=वर्ते, येन रामेण, मे=मम अङ्गदस्य, जनकः=पिता वाली, हतः=व्यापादितः । अहं, तस्य=प्रसिद्धस्य, वालिनः = तन्नाम्नो वानराधिपतेः, पुत्रः = तनयः, अस्मि, यद्वीर्यानुभवः, यस्य वीर्यस्य = पराक्रमस्य अनुभवः = सम्यग्ज्ञानं परिचयः, तव = ते रावणस्य वर्तते । ( क्रोडे धृत्वा स्वात्मनः पराक्रमं त्वां प्रदर्शितवतो मत्पितुर्वालिनो वधं यश्चक्रे, तेन रामेण त्वत्समीपं प्रहितः सन्देशवाहकोऽहमस्मीति भावः । ) अनुष्टुब् वृत्तम् ॥ २५ ॥

इत्थमङ्गदोक्तेरनन्तरं कवी रावणाङ्गदप्रश्नोत्तरस्वरूपं पद्यमेकं प्रदर्शयति । तत्र रावणस्य प्रश्नोऽयम्-**राम** इति । रामः=रामचन्द्रः, किं कुरुते = किं कार्यं करोति ?

---

है—राक्षसों का समूल नाश करने के लिए जिस विष्णु ने मनुष्य का रूप धारण किया, उस भगवान् राम के द्वारा तुम्हारे पास भेजा गया मैं तुम्हें जीतनेवाले वाली का पुत्र हूँ । ) अनुष्टुप् छन्द है ॥ २४ ॥

और भी—

मैं उन श्रीरामचन्द्र जी का दूत हूँ, जिन्होंने मेरे पिता वाली को मारा था । तथा मैं उस वाली का पुत्र हूँ, जिसके पराक्रम का अनुभव तुम्हें है । ( भाव यह है—बगल में दवाकर तुम्हें अपना पराक्रम दिखलानेवाले मेरे पिता वाली का वध जिन्होंने किया, मैं उन राम के द्वारा तुम्हारे पास भेजा गया सन्देशवाहक हूँ । ) अनुष्टुप् छन्द है ॥ २५ ॥

**रावण**—[ अङ्गद से ] राम क्या करता है ?

**रावणः**—[ साशङ्कम् ] रामस्याधुना कीदृशी चर्या ?

**अङ्गदः**—

अङ्के कृत्वोत्तमाङ्गं प्लवगबलपतेः पादमक्षस्य हन्तुः
कृत्वोत्सङ्गे सलीलं त्वचि कनकमृगस्याङ्गमाधाय शेषम्।
बाणं रक्षःकुलघ्नं प्रगुणितमनुजेनादरात्तीक्ष्णमक्ष्णः
कोणेनोद्वीक्षमाणस्त्वदनुजवचने दत्तकर्णोऽयमास्ते ॥ २७॥

---

अस्य = रावणस्य, निकटे=समीपे, लङ्कापदे=लङ्काराज्ये, विभीषणः=तस्यानुजो भ्राता, स्थापितः = उपवेशितोऽस्ति। प्रश्नोत्तरस्वरूपं पद्यमत्र समापितं कविना। शार्दूलविक्रीडितं वृत्तम् ॥ २६ ॥

रावणो भीतः पुनः पृच्छति—**साशङ्कमिति**। सभयमित्यर्थः।

**रामस्येति**। चर्या=आचरणं स्थितिः, कीदृशी=किंस्वरूपा ?

ततोऽङ्गदो रामस्य स्थितिं दर्शयन् स्वरूपं वर्णयति—

**अङ्के** इति। प्लवगबलपतेः, प्लवगबलस्य=वानरसेनायाः पतिः = स्वामी सुग्रीवः तस्य, अङ्के=उत्सङ्गे, उत्तमाङ्गं = शिरः, कृत्वा=विधाय स्थापयित्वा, अक्षस्य=तन्नामकस्य रावणपुत्रस्य, हन्तुः = नाशयितुः हनूमत इति यावत्, उत्सङ्गे=अङ्के, पादम्=चरणं, कृत्वा=सम्पाद्य, कनकमृगस्य = पूर्वं हतस्य सुवर्णमृगस्य, त्वचि = चर्मणि आसनस्वरूपे, शेषम् = अवशिष्टम्, अङ्गं = पृष्ठाद्यवयवं सर्वं शरीरमिति यावत्, जात्येकवचनमिदम्, आधाय = स्थापयित्वा अनुजेन=लक्ष्मणेन कारणेन, प्रगुणितम्= अधिकगुणवत्त्वं नीतं, रक्षःकुलघ्नं = राक्षसवंशस्य विनाशकं, तीक्ष्णं = प्रखरं भयानकं, बाणं = शरम्, आदरात् = संमानपूर्वकम्, अक्ष्णः = नेत्रस्य, कोणेन = प्रान्तभागेन, उद्वीक्षमाणः = पश्यन् सन्, अयं = रामचन्द्रः, त्वदनुजवचने, तव = ते अनुजस्य = विभीषणस्य वचने = वचसि, दत्तकर्णः, दत्तौ = योजितौ कर्णौ श्रवणे येन

---

**रावण**—[ भय के सहित ] इस समय राम की स्थिति कैसी है ?

**अङ्गद**—वानर-सेना के अधिपति सुग्रीव की गोद में सिर, अक्षकुमार को मारनेवाले हनुमान् की गोद में पैर तथा ( मारे हुए ) सुवर्णमृग के चर्मरूपी आसन पर बचे हुए ( पीठ आदि सारे ) अङ्गों को रखकर, लक्ष्मण के द्वारा अधिक गुणवान् बनाये गये—राक्षसकुल के नाशक—तीखे बाण को आदर के साथ आँख के कोने ( कटाक्ष ) से देखते हुए श्रीरामचन्द्रजी तुम्हारे छोटे भाई विभीषण की बात

अङ्गदः—न किञ्चित्

रावणः—अपि च प्राप्तः पयोधेस्तटं
कस्मात्साम्प्रतम्

अङ्गदः—एवमेव हि

रावणः—ततो बद्धः किमम्भोनिधिः ?।

अङ्गदः—क्रीडाभिः

रावणः—किमसौ न वेत्ति पुरतो लङ्केश्वरो वर्तते

अङ्गदः—
जानात्येव विभीषणोऽस्य निकटे लङ्कापदे स्थापितः ॥ २६ ॥

---

अङ्गदस्योत्तरमाह—**न किञ्चिदिति** किमपि कार्यं न करोतीत्यर्थः।

पुना रावणस्य प्रश्नः—**अपि चेति**। अपिच = किञ्च, साम्प्रतम् = इदानीं, पयोधेः = समुद्रस्य, तटं = तीरं, कस्मात् = केन कारणेन, प्राप्तः = उपस्थितोऽस्ति।

अङ्गदस्योत्तरम्—**एवमेव हीति**। हि एवमेव = नूनम् इत्थमेव। कारणं किमपि नास्तीत्यर्थः।

ततो रावणस्य प्रश्नः—**तत** इति। ततः=तर्हि कारणाभावे सति, अम्भोनिधिः= समुद्रः, किम् = किमर्थम्, बद्धः = बन्धनविषयीकृतः ?

तत्राङ्गदस्योत्तरम्—**क्रीडाभिरिति**। क्रीडाभिः = कौतूहलैः, अनायासमित्यर्थः।

रावणस्य पुनः प्रश्नः—**किमसाविति**। असौ = रामः, न वेत्ति किम् = किमु न जानाति ? ( यत् ) लङ्केश्वरः=रावणः, पुरतः = अग्रभागे, वर्तते=अस्ति।

अङ्गदस्योत्तरं तत्र—**जानात्येवेति**। जानाति एव = अवश्यं वेत्ति, ( यत् )

---

**अङ्गद**—कुछ नहीं।

**रावण**—और, इस समय समुद्र के तीर पर क्यों उपस्थित है ?

**अङ्गद**—निश्चय, ऐसे ही। ( कोई कारण नहीं है। )

**रावण**—तो, समुद्र को क्यों बाँधा ?

**अङ्गद**—कौतूहलों से ( अनायास, खेलवाड़ में )।

**रावण**—क्या राम नहीं जानता है कि रावण सामने है।

**अङ्गद**—अवश्य वे जानते हैं ( कि ) रावण के समीप लङ्का की राजगद्दी पर ( छोटा भाई ) विभीषण बैठाया गया है। ( यहाँ कवि ने प्रश्नोत्तररूपी पद्य समाप्त किया। ) शार्दूलविक्रीडित वृत्त है॥ २६ ॥

[ रावणस्तत्रावज्ञां नाटयन् प्रहस्तस्य कर्णे एवमेवं कथयति । ]

**प्रहस्तः**—यदादिशति देवः । [ इति निष्क्रान्तः । ]

---

तादृशः सावधान इति यावत्, भूत्वेति शेषः, आस्ते = उपविशति स्थितोऽस्ति । ( अयं भावः–सुग्रीवो यस्य मूर्धानं हनूमांश्च यस्य चरणमुत्सङ्गे निधाय सभक्ति संवाहयतः, सोऽयं श्रीरामचन्द्रः सुवर्णमृगचर्मासने पृष्ठं निवेश्य स्थितो राक्षसध्वंसकरे शरे सकटाक्षं दृष्टिपातेन वीरभावं प्रदर्शयन् विभीषणवचनश्रवणाय सावधानस्तिष्ठति । ) **स्रग्धरा वृत्तम्** ॥ २७ ॥

**रावण** इति । तत्र = रामस्य स्थितेः प्रदर्शकेऽङ्गदवचने, अवज्ञाम् = अनादर-भावं, नाटयन् = अभिनयन् प्रदर्शयन्निति यावत् । एवमेवम् = इत्थं वक्ष्यमाणं, कुरुष्वेति शेषः ।

करिष्यमाणं कार्यं केनापि नाकर्णनीयमिति तद्वचनं प्रहस्तस्य कर्णे कथितं रावणेन । तच्च कार्यं 'मायामयीं सीतामानये'त्येवंरूपमवगन्तव्यम् ।

रावणादेशं स्वीकृतवतः प्रहस्तस्य ततः प्रस्थानं दर्शयति—**यदादिशतीति** । **यदाज्ञा**पयति श्रीमान्, ( तदहं करोमीत्यर्थः । )

**इतीति** । निष्क्रान्तः = निर्गतः ।

---

में कान देकर ( सावधान होकर ) लेटे पड़े हैं । ( भाव यह है—सुग्रीव जिनका माथा तथा हनूमान् जिनका पैर अपनी गोद में रखकर भक्ति के साथ दबा रहे हैं, वे सुवर्णमृग–चर्म के आसन पर पीठ रखकर लेटे हुए श्रीरामचन्द्र जी, राक्षसों का नाश करनेवाले बाण पर कटाक्षयुक्त दृष्टि पात के द्वारा वीरभाव को दिखलाते हुए, विभीषण की बात सुनने को सावधान हैं । ) स्रग्धरा छन्द है ॥ २७ ॥

[ रावण, ( राम की स्थिति दिखलानेवाली ) अङ्गद की बात पर निरादर दिखलाता हुआ, प्रहस्त के कान में कहता है 'ऐसा ऐसा ( करो )' । ]

किया जानेवाला काम कोई न सुने–इस लिए वह बात रावण ने प्रहस्त के कान में कही । और वह काम 'बनावटी सीता ले आओ' इस प्रकार का समझना चाहिए ।

**प्रहस्त**—श्रीमान् जो आज्ञा देते हैं ( वह मैं करता हूँ । )

[ इस प्रकार ( कहकर ) चला गया । ]

[ तब प्रहस्त के साथ नकली सीता प्रवेश करती है । ]

[ ततः प्रविशति प्रहस्तेन सह मायामैथिली । ]

**मैथिली**—जअदु जअदु अज्जउत्तो । जयतु जयत्वार्यपुत्रः । [ इत्यभिदधाना रावणोत्सङ्गमारोहति । ]

**रावणः**—[ स्वगतम् । ] साधु, भो मायामयि ! साधु जानासि दशकण्ठमाराधयितुम् ।

**अङ्गदः**—[ सविषादमात्मगतम् । ] अपि नाम जानकी पण्याङ्गना-

ततो मायासीतां प्रवेशयति—**ततः प्रविशती**त्यादिना । मायामैथिली = कपटमयी कृत्रिमा सीता ।

अत्र कृत्रिमां स्वानुकूलां च सीतां प्रवेशयतो रावणस्यैषोऽभिप्रायोऽस्ति यत्तस्या रावणानुरागसूचकानि वचनान्याकर्ण्य विस्मयमानोऽङ्गदस्तत्सर्वं गत्वा रामं कथयेदिति ।

प्रविशन्त्या मायामय्याः सीताया वाक्यमाह—**जअदु** इति । 'जअदु' इति द्विर्वचनेन जयस्य पौनःपुन्यं सूच्यते ।

'आर्यपुत्रः पुनः पुनर्विजयं प्राप्नोतु' इति वदन्ती रावणस्याङ्कमध्यं प्रविशतीत्यर्थः ।

ततः प्रसन्नो रावणो मनसि तां प्रशंसन्नाह— **साधु** इति । साधु = शोभनम् , आराधयितुं = सेवितुं प्रसादयितुमिति यावत् , साधु = सम्यक् । ( शोभनं प्रशंसनीयं ते कार्यम् । रावणप्रसादने निपुणासीति भावः ) ।

रावणोत्सङ्गारोहणं दृष्ट्वा तस्याः सीतायाश्चरित्रं शङ्कमानः सखेदं मनस्याहाङ्गदः—**अपि नामे**ति । अपि नाम = किम् , *पण्याङ्गनाचरितम् , पण्या = विक्रेतव्या या

यहाँ बनावटी और अपने अनुकूल सीता का प्रवेश करानेवाले रावण का यह अभिप्राय है कि उसके रावणविषयक अनुरागसूचक वचनों को सुनकर आश्चर्य करता हुआ अङ्गद वह सब जाकर राम से कह दे ।

**मायामैथिली**—आर्यपुत्र की जय हो जय हो । [ ऐसा कहती हुई रावण की गोद पर बैठ जाती है । ]

**रावण**—[ अपने मन में ] अरी कपटमयी सीता ! ठीक है, रावण को प्रसन्न करना भली भाँति जानती हो । ( तुम्हारा काम सुन्दर, प्रशंसा के योग्य है । रावण को प्रसन्न करने में निपुण हो । )

**अङ्गद**—[ खेद के साथ, मन में ] क्या सीता वेश्या का सा काम करेगी ?

*अत्रादर्शपुस्तके 'परायाङ्गनाचरित'मित्येष पाठो मुद्रित उपलभ्यते । अशुद्धेऽस्मिन्

चरितमाचरेत्! भवतु। विलोकयामि तावत्।

**रावणः**—देवि! विदेहनन्दिनि! प्रतिबोध्यतां रामप्रहितोऽयं शाखामृगः।

**मायामैथिली**—[अङ्गदं सबहुमानमवलोक्य।] वत्स! अङ्गद! मह वयणेहिं पडिबोधेहि राहवम्—

इम्मवर कीस खिज्जसि राहव! तं वज णियं णअरम्।

---

अङ्गना = स्त्री, अभीष्टं मूल्यमादाय निश्चितं समयं यावद् यस्य कस्यापि भवितुमर्हन्ती वेश्येति यावत्, तस्या इव चरितं = वृत्तं कार्यम्, आचरेत् = कुर्यात्। भवतु = तिष्ठतु, तावदिति वाक्यालङ्कारे। किमेषा सीता वेश्येव कार्यं कुर्यात्? तिष्ठतु, पश्यामि—(अग्रे किं भवतीति।)

**देवीति**। विदेहनन्दिनि = देहाभिमानरहितस्य जनकस्य राजर्षेः पुत्रि! रामप्रहितः = रामेण प्रेषितः, शाखामृगः = वानरः, अयम् = अङ्गदः, प्रतिबोध्यताम् = संवेद्यतां बोधनपुरःसरं सूच्यताम्। रामस्य दूतमेतमनुकूलं विधेहीति भावः।

ततः प्रतिबोधयन्ती सीताङ्गदं सादरं दृष्ट्वा ब्रूते—**वत्सेति**। मद्वचनानि रामचन्द्रं प्रति सूचयेति भावः। तथाहि—**इम्मवरेति**। एषाम्, आदरे बहुत्वमिदम्, अस्य

---

अच्छा, देखता हूँ—(आगे क्या होता है?।)

**रावण**—देवी! विदेहराज जनक की पुत्री! राम के भेजे हुए इस बन्दर को समझाओ। (अर्थात् राम के दूत इस बन्दर को अनुकूल बनाओ।)

**मायामैथिली**—[अङ्गद को बहुत आदर के साथ देखकर] ओ बच्चे अङ्गद! मेरी बातों से राम को समझाओ—

इन (रावण) के ऊपर क्यों खीझ रहे हो? हे राम! तुम प्रसिद्ध अपनी नगरी

---

पाठे तदर्थविचारप्रसङ्गे च विषमे समुपस्थिते सति परस्परालापे कदाचिदस्मन्मित्रैर्होशिङ्गजगन्नाथशास्त्रिभिरर्थानुगुण्येन 'पण्याङ्गनाचरित'मित्येष पाठः स्वकल्पितः प्रास्तावि। अनुरूप इति मत्वा च स एव पाठोऽस्माभिर्विन्यस्तः। तत्र चैवं युक्तरूपं प्रतिभाति यन्मूलपुस्तके हस्तलिखिते वर्तमानः 'पण्याङ्गने'त्यत्र 'परायाङ्गने'त्येतादृशोऽक्षरविन्यासः संशोधकमहाभागैर्मुद्रणकाले, ण्यअनभूतस्यार्धणकारस्य 'रा'स्वरूपेणाऽप्यवगन्तुं शक्यतया 'परायाङ्गने'त्येवंरूपेण पठितः स्यात्। स एवाऽपपाठोऽद्यापि पुस्तकस्यास्य चतुर्थेऽपि संस्करणे तदवस्थ एव सन्दृश्यत इत्यहो! संशोधनकर्मणः कौशलम्।

दिण्णाहं णिजहिअए सक्खीकिय मयणमेअस्स ॥ २८ ॥

अवि अ।

मयि रावणाङ्कपङ्कजविलासहंसीइँ अज्ज रहुणाहो।
रक्खसभटेहिं भञ्जिदभरतं भूसेदु णिजरज्जम् ॥ २९ ॥

(वत्स ! अङ्गद ! मद्वचनैः प्रतिबोधय राघवम्—
एषामुपरि कस्मात्खिद्यसे राघव ! तद् व्रज निजं नगरम्।
दत्ताहं निजहृदये साक्षीकृत्य मदनमेतस्मै ॥

---

पुरोवर्तिनो रावणस्येत्यर्थः, उपरि = उपरिष्टात्, कस्मात् खिद्यसे=किमर्थं विषीदसि ? कुप्यसीति यावत्। रावणविषये किन्नाम खिन्नः ? कुपितो भवसीत्यर्थः। हे राघव = हे राम !, त्वम्, तत्=प्रसिद्धं, निजं नगरं = स्वां पुरीमयोध्यां, व्रज=गच्छ। अहं=सीता, निजहृदये = आत्मनश्चित्ते, मदनं = कामं, साक्षीकृत्य = साक्षिभूतं कृत्वा, एतस्मै = रावणाय, दत्ता = समर्पिताऽस्मि। (अयं भावः—हे राम ! रावणस्य बलं विचिन्त्य त्वया क्रोधो न कार्यः। गच्छायोध्याम्। अहं मनसा रावणस्य भार्या सम्पन्ना। अत्र साक्षी मदनोऽस्तीति।) आर्या वृत्तम् ॥ २८ ॥

**अपि चेति**। पुनरन्यदप्याह—**मयीति**। अद्य=वर्तमाने समये, मयि=सीतायां, रावणाङ्कपङ्कजविलासहंस्यां, रावणस्य अङ्कः = उत्सङ्ग एव पङ्कजं = कमलं तत्र विलासे= क्रीडाकरणे हंसी = हंसाङ्गनास्वरूपा तथाभूतायां सत्यां, रघुनाथः = रामचन्द्रः, राक्षसभटैः = वीरैर्निशाचरैः, भञ्जितभरतं, भञ्जितः = आमर्दितः भरतः = रामभ्राता कैकयीतनूजो यत्र तत्, भञ्जितपदप्रयोगोऽयं चिन्त्यः, निजराज्यं=स्वां राजधानीमयोध्यां,

---

अयोध्या चले जाओ। मैं अपने हृदय में कामदेव को साक्षी बनाकर इन (रावण) को दे दी गयी हूँ। (भाव यह है—हे राम ! रावण के बल का विचार कर, तुम्हें खीझना नहीं चाहिए। तुम अयोध्या चले जाओ। मैं मन से रावण की पत्नी बन गई हूँ। इसमें कामदेव साक्षी है)। आर्या छन्द है ॥ २८ ॥

और भी—

मेरे, रावण के उत्सङ्ग (गोद)—रूपी कमल पर विहार करने में हंसाङ्गना-स्वरूप होने पर, रामचन्द्र उस अपनी राजधानी को जाकर अलङ्कृत करें, जहाँ भरत पर राक्षसवीरों द्वारा आक्रमण किया गया है। (सारांश यह है कि—मैं रावण की गोद में विहार कर रही हूँ। राक्षसों ने अयोध्या में जाकर भरत पर आक्रमण

अपि च।

मयि रावणाङ्कपङ्कजविलासहंस्यामद्य रघुनाथः।
राक्षसभटैर्भञ्जितभरतं भूषयतु निजराज्यम्॥ )

अङ्गदः—[ कर्णौ पिधाय ] न खलु भवति जानकी। यतः,

अश्रुतपूर्वाऽविनया पर्याप्तालङ्कृता च शीलेन।
सा राघवस्य पत्नी पुनाति भुवनानि गङ्गेव॥ ३०॥

[ ततः प्रविश्य पटाक्षेपेण ]

---

भूषयतु=गत्वाऽलङ्करोतु। (अहं रावणाङ्के विहरामि। राक्षसैरयोध्यां गत्वा भरतस्योपर्याक्रमणं कृतम्। अतो निजा राजधानी रामेण प्रतिगन्तव्येति भावः।)आर्या वृत्तम्॥२९॥

विलक्षणमिदं वचनमाकर्ण्य तस्याः सीतात्वे सन्दिहानोऽङ्गदः कर्णयोर्हस्तं दत्त्वा ब्रूते—**कर्णौ पिधायेत्यादि**। कर्णौ पिधाय = हस्ताभ्यां कर्णयोर्द्वारे अवरुध्य, तद्वचनमश्रुत्वेत्यर्थः। **न खल्विति**। खलु निश्चये, इयमिति शेषः,पूर्वोक्तं वदन्तीति तदर्थः।

**अश्रुतपूर्वेति**। अश्रुतपूर्वाऽविनया, अश्रुतपूर्वः = पूर्वं न श्रुतः आकर्णितः अविनयः = औद्धत्यं यस्याः सा, शीलेन = सदाचारेण च, पर्याप्तालङ्कृता, पर्याप्तं = पूर्णरूपेण यथा स्यात्तथा अलङ्कृता = विभूषिता, सा = प्रसिद्धा पतिव्रता, राघवस्य = रामस्य, पत्नी = भार्या सीता, गङ्गा = भागीरथी इव, भुवनानि = लोकान्, पुनाति= पवित्रान् करोति ( सीता जगत्पावनी पतिव्रता च प्रसिद्धेति दुराचारिणीयं सीता न भवितुमर्हतीति भावः। ) आर्या वृत्तम्॥ ३०॥

इदानीं परमार्थसीतास्वरूपं वर्णयन्त्याः कस्याश्चिद् राक्षस्याः प्रवेशं दर्शयति कविः—**ततः प्रविश्येति**। पटाक्षेपेण, पटस्य = जवनिकायाः आक्षेपः=आकर्षणम् अपसारणं वा तेन।

---

किया है, अतः तुम अपने राज्य में लौट जाओ। ) आर्या छन्द है॥ २९॥

**अङ्गद**—[ कानों को बन्दकर ] निश्चय ( यह ) सीता नहीं है। क्योंकि—

जिसका अविनय कभी नहीं सुना गया और जो सदाचार से पूर्णतया अलङ्कृत है, वह रामचन्द्र की भार्या पतिव्रता सीता गङ्गा के समान ( सब ) लोकों को पवित्र करती है। ( अर्थात् सीता जगत् को पवित्र करने वाली पतिव्रता प्रसिद्ध है, इसलिए यह दुराचारिणी सीता होने योग्य नहीं है।) आर्या छन्द है॥ ३०॥

[ तब पर्दा खींचकर अथवा हटाकर, प्रवेश करके ]

**राक्षसी—**

श्रुत्वा रघुपतेः किञ्चिदनिष्टं देव ! मैथिली।
विधातुं सर्वदुःखान्तं लतापाशेन वाञ्छति ॥ ३१ ॥

**रावणः**—[ सखेदम् ] आः ! किमेवमभिहितमनवसरे । राक्षसाः ! रक्षत रक्षत जानकीम्। [ इति मायामैथिलीं विसर्जयति ]

**अङ्गदः**—[ सहर्षम् ] परमार्थमैथिलीमयेन तेजसा तिरस्कृतं माया-मैथिलीमयमन्धकारम्।

---

राक्षस्या वचनमाह—

**श्रुत्वेति**। हे देव = स्वामिन् ! रघुपतेः = रामस्य, किञ्चित् = किमपि, अनिष्टम् = अमङ्गलं, श्रुत्वा = निशम्य, मैथिली = सीता, लतापाशेन, लतायाः = वल्लर्याः पाशः = बन्धनं तेन कारणेन, सर्वदुःखान्तं = सर्वेषां दुःखानां नाशं, विधातुं = कर्तुं, वाञ्छति = इच्छति। ( रामचन्द्राऽमङ्गलश्रवणेन समं सीता स्वीयमप्यमङ्गलं किमपि चिकीर्षतीति भावः। ) अनुष्टुप् वृत्तम् ॥ ३१ ॥

एतद् वृत्तं श्रुत्वा दैन्येन सह रावणः प्राह—**आः** इति। आः = कष्टम्, अनवसरे = अवसराभावे, अनुचिते समये, एवं = 'श्रुत्वा रघुपते'रित्यादिरूपं, किम् अभिहितं = राक्षस्या किं कथितम् ? सीतानुरागप्रसङ्गे सीतामनस्तापवृत्तश्रवणं नोचितम्, अत एतद्वृत्तकथनस्यावसरो नास्तीत्यर्थः। ततो राक्षसान् प्रत्याह—**राक्षसा** इति। रक्षत रक्षतेति द्विरुक्तिरियं रक्षणस्यावश्यकर्तव्यत्वं द्योतयति।

**इतीति**। इति=पूर्वोक्तं, वदन्निति शेषः, विसर्जयति=सेवकद्वारा दूरीकरोति।

मायासीतां विनष्टां दृष्ट्वाऽङ्गदः प्रसन्नः प्राह—**परमार्थेति**। परमार्थमैथिली-

---

**राक्षसी**—हे नाथ ! रामचन्द्र के कुछ अमङ्गल को सुनकर सीता लता के फाँस से सब दुःखों का अन्त करना चाहती है। (रामचन्द्र का अमङ्गल सुनने के साथ सीता अपना भी कुछ अमङ्गल करना चाहती है। ) अनुष्टुप् छन्द है ॥ ३१ ॥

**रावण**—[ दीनता के साथ ] ओह ! बिना समय के ( अनुचित समय में ) ऐसा क्या कहा ? राक्षसो ! सीता की अवश्य रक्षा करो।

[ इस प्रकार ( कहता हुआ ) माया सीता को हटा देता है। ]

**अङ्गद**—[ हर्ष के सहित ] सत्यसीता-रूपी प्रकाश से मायासीता-रूपी अन्धकार हट गया।

रावणः—भो वलीमुख ! किमपि वक्तुकामः ?

अङ्गदः—

न दोषः स्वल्पोऽपि प्रभवति तवाकृत्यकरणा-
दपि क्रव्यादानां भवति परमं मण्डनमिव ।
अतः क्रव्यादेश ! त्वयि न परदारापहरणा-
दनौचित्यं किञ्चित्तदपि विषमाः क्षत्रियरुषः ॥ ३२ ॥

---

मयेन = सत्यसीतास्वरूपेण, तेजसा = प्रकाशेन, मायामैथिलीमयं = मिथ्यासीतास्वरूपम्, 'अन्धकारोऽस्त्रिया'मिति क्लीवत्वम् ।

पुनरङ्गदात्किमपि श्रोतुमिच्छन् ब्रवीति रावणः—**भो वलीमुखेति** । वलीमुख= वानर ! वक्तुकामः, वक्तुं = कथयितुं कामः = अभिलाषोऽस्येति तादृशः, 'तुं काममनसोरपी'ति मलोपः, असीति शेषः ।

अङ्गदः कथयति—

**न दोष** इति । अकृत्यकरणादपि = कुकार्यविधानादपि, तव = ते, स्वल्पः अपि = अणुः अपि, दोषः = दूषणं, न प्रभवति = न जायते । तदकृत्यमिति शेषः, क्रव्यादानां, क्रव्यं = मांसम् अदन्ति = भक्षयन्तीति तेषां राक्षसानां, परमं = बहु, भूषणम् इव = शोभाजनकं यथा, भवति = सञ्जायते । अतः = अस्मात्कारणात्, हे क्रव्यादेश = राक्षसराज रावण !, परदारापहरणात् = परस्त्रिया आनयनात्, त्वयि = त्वद्विषये, किञ्चित् = किमपि, अनौचित्यम्=औचित्याभावः, न = नास्ति । तदपि = तथापि एवं सत्यपि, क्षत्रियरुषः = क्षत्रियाणां क्रोधाः, विषमाः = भयानकाः भवन्ति। ( राक्षसाः सर्वं कर्तुं शक्नुवन्तीति राक्षसराजस्य ते परस्त्रीहरणं नानुचितम्, परमेतदसह्यं क्षत्रियाणां भवतीति भावः । ) शिखरिणी वृत्तम् ॥ ३२ ॥

---

**रावण**—अरे बन्दर ! कुछ कहने को इच्छुक हो ?

**अङ्गद**—बुरा काम करने से भी तुम्हारा थोड़ा भी दोष नहीं है । ( वह बुरा काम ) राक्षसों के लिए शोभाजनक सा हो जाता है । अतः हे राक्षसराज ! परस्त्री-हरण करने से तुममें कुछ अनुचित नही है, तो भी क्षत्रियों के क्रोध भयङ्कर होते हैं । ( राक्षस सब कुछ कर सकते हैं, अतः राक्षसराज तुम्हारा परस्त्रीहरण कार्य अनुचित नहीं है, किन्तु यह काम क्षत्रियों को असह्य हो जाता है । ) शिखरिणी छन्द है ॥ ३२ ॥

**रावणः**—[ सक्रोधम् ] आः पाप ! दुर्मुख ! मौखर्यदर्शनेन राघवमर्घयसि न पुनर्निदर्शनेन ।

**अङ्गदः**—किमपरमुदाहरणम् ? विलोकय ।

समं प्रतिज्ञया येन तीर्त्वा दुस्तरमर्णवम् ।
वनद्रुमाः सुवेलस्य भज्यन्ते त्वद्भुजा इव ॥ ३३ ॥

**रावणः**—अरे ! विचारमूढ !

पारावतैः किमयमम्बुनिधिर्न तीर्णः

---

इदं निशम्य रावणः क्रुद्धो ब्रूते--**आः पापेति** । दुर्मुख = अवद्यमुख ! मौखर्यदर्शनेन = दुर्मुखताप्रकाशनेन, अर्घयसि = पूजयसि, निदर्शनेन = उदाहरणेन ।

अङ्गदो वक्ति--**किमपरमि**ति । अपरम् = अन्यत्, उदाहरणं = निदर्शनम् । भविष्यतीति शेषः ।

**सममि**ति । येन = रामेण, प्रतिज्ञया = आश्रवेण दृढनिश्चयेनेति यावत्, समं= सह, दुस्तरं = दुःखेन तरीतुं शक्यम्, अर्णवं = समुद्रं, तीर्त्वा = उल्लङ्घ्य, सुवेलस्य= तदाख्यपर्वतस्य, वनद्रुमाः=काननवृक्षाः, त्वद्भुजा इव=त्वदीया बाहवो यथा, भज्यन्ते= उन्मूल्यन्ते । ( समुद्रपारं गतो रामस्ते भुजान् यथोन्मूलयिष्यति तथैव साम्प्रतं सुवेलकाननवृक्षानुन्मूलयतीति भावः । ) अनुष्टुब् वृत्तम् ॥ ३३ ॥

ततो रावणः प्राह—**अरे** इति । विचारमूढ = विचारं कर्तुमसमर्थ ! ।

**पारावतै**रिति । पारावतैः = कपोतैः, अयम्=एष पुरो वर्तमानः, अम्बुनिधिः=

---

**रावण**—[ क्रोध के साथ ] अरे पापी !( दुष्टमुखवाले ) बकवादी ! बकवादीपन दिखलाने से रामचन्द्र का आदर कर रहे हो न कि उदाहरण से ।

**अङ्गद**--और क्या उदाहरण ( होगा ) ? देखो—

जो राम प्रतिज्ञा के साथ, कठिनाई से पार करने योग्य समुद्र को पार कर तुम्हारी भुजाओं के समान सुवेल पर्वत के वन के वृक्षों को उखाड़ते हैं । ( अर्थात् समुद्र पार गये हुए रामचन्द्रजी जिस प्रकार तुम्हारी भुजाओं को उखाड़ेंगे, उसी प्रकार इस समय सुवेल पर्वत के वृक्षों को उखाड़ रहे हैं । ) अनुष्टुप् छन्द है ॥३३

**रावण**—अरे विचारहीन !

क्या इस समुद्र को कबूतरों ने पार नहीं किया ? और कहाँ किस प्रकार बन्दरों ने पहाड़ों पर आक्रमण नहीं किया ? ( अवश्य किया ) । मैं तब बाहुबल

क्रान्ताः कथं न कपिभिः क्व च नाम शैलाः ।
तद्वेद्मि दोर्बलमसौ यदि शौर्यरेखा-
माविष्करोति करवालकषोपलेऽद्य ॥ ३४ ॥

अपि च, रे ! रावणं न जानासि ।

आस्कन्धावधि कण्ठपीठविपिने प्राक्चन्द्रहासाऽसिना
छेत्तुं प्रक्रमिते मयैव झटिति त्रुट्यच्छिरासन्ततौ ।

---

समुद्रः, किं न तीर्णः = न लङ्घितः किमु ? अर्थादवश्यं लङ्घितः । च = अपि च, क्व = कुत्र स्थाने, कथं = केन प्रकारेण, कपिभिः = वानरैः, शैलाः = पर्वताः, न नाम = न तावत्, क्रान्ताः = आक्रान्ताः ? अवश्यमेवाक्रान्ताः । तत् = तदा, अहं दोर्बलं = भुजयोः सामर्थ्यं, वेद्मि = जानामि, यदि=चेत्, असौ = रामः, अद्य = अस्मिन्समये, करवालकषोपले, करवालः = मम खड्ग एव कषोपलः=निकषपाषाणः तस्मिन्, शौर्यरेखां, शौर्यस्य = सुवर्णरूपवीर्यस्य रेखां = लेखाम्, आविष्करोति = प्रकाशयति । ( समुद्रतरणं पर्वताक्रमणं चेति सरलं कार्यम् । मम खड्ग एव रामस्य शूरतायाः परीक्षकोऽधुनेति भावः । ) वसन्ततिलका वृत्तम् ॥ ३४ ॥

पुनरपि किञ्चित्कथयिष्यन्नाह—**अपि चे**त्यादि ।

**आस्कन्धावधीति** । प्राक् = पूर्वं, मयैव = रावणेनैव, चन्द्रहासाऽसिना = चन्द्रहासनामकेन खड्गेन, त्रुट्यच्छिरासन्ततौ, त्रुट्यन्ती = छिन्ना भवन्ती शिरासन्ततिः = नाडीसमूहः यस्य तादृशे, कण्ठपीठविपिने, कण्ठाः = गला एव पीठानि = आसनानि येषां तानि मुखानीति यावत् तेषां विपिने= वने समूह इति यावत्, अथवा कण्ठपीठानां = गलस्वरूपकाष्ठफलकानां विपिने, आस्कन्धावधि = स्कन्धपर्यन्तम्, आङ् मर्यादाभिविध्योः, झटिति = त्वरया, छेत्तुं = कर्तितुं, प्रक्रमिते = प्रारब्धे सति, कथञ्चिदत्रेट् समाधेयः, प्रक्रमः प्रारम्भः सञ्जातोऽस्येति वा, अत्रार्थे–तदस्य सञ्जातं

---

समझता हूँ, यदि राम आज मेरे खड्गरूपी कसौटी पर शूरता ( रूपी सोने ) की लकीर प्रकाशित करता है । ( समुद्र को पार करना पहाड़ों पर आक्रमण करना- यह सहज काम है । इस समय मेरी तलवार ही राम के पराक्रम की परीक्षा करने- वाली है । ) वसन्ततिलका छन्द है ॥ ३४ ॥

और, अरे ! रावण को नहीं जानते हो ।

पहले जब मैंने ही, चन्द्रहास खड्ग से मुखों अथवा कण्ठरूपी पटरों का जंगल

अस्मेरं गलिताश्रु गद्गदपदं भुग्नं च यद्येष्वभू-
द्वक्त्रेष्वेकमपि स्वयं स भगवांस्तन्मे प्रमाणं शिवः ।। ३५ ।।

**अङ्गदः—**

किं राघवस्य दशकन्धर ! चन्द्रहास-
वंशेऽभवन्भुवनभीतिभिदः शरास्ते ।

---

तारकादिभ्य इतच्, यदि = चेत्, एषु वक्त्रेषु = दशसु मुखेषु, एकमपि = एकं मुखमपि, अस्मेरम् = ईषद्धास्यरहितं, गलिताश्रु, गलितानि = निर्गतानि अश्रूणि=रोदनजलानि यस्मात्तत्, गद्गदपदं, गद्गदानि = स्खलद्गतीनि पदानि=शब्दाः यस्मिंस्तत्, भुग्नं = कुटिलं च, अभूत् = अभवत्, तत् = तर्हि, स्वयं = स्वस्वरूपेण, सः = प्रसिद्धः, भगवान्, शिवः = शङ्करः, मे = मम, प्रमाणं = प्रमाणभूतः अस्ति । ( यदाहं भगवतः शङ्करस्य पुरः सोत्साहं स्वमुखानि च्छेत्तुमुद्यतोऽभवं तदैकमपि मे मुखं दुःखाकुलं नाभूत् । अत्रार्थे भगवान् शङ्कर एव साक्षीति भावः । ) शार्दूलविक्रीडितं वृत्तम् ॥ ३५ ॥

रावणस्य गर्वोक्तौ रामशराणां शूरतां वर्णयन्नङ्गदः प्राह—

**किमिति ।** हे दशकन्धर ! = रावण !, भुवनभीतिभिदः, भुवनभीतिं=जगद्भयं भिन्दन्ति = विदारयन्तीति तादृशाः, ते = प्रसिद्धाः, शराः = बाणाः, किं = किमु, चन्द्रहासवंशे = चन्द्रहासनामकखड्गस्यान्वये, अभवन् = सञ्जाताः ? मूढ != रे मूर्ख !,

---

( समूह )—जिसकी नाडियों का समूह टूट रहा था—त्वरा के साथ कन्धे तक काटना आरम्भ किया, तब यदि इन मुखों में एक मुख भी मन्दहास्य से रहित, आँसू गिराने वाला, लड़खड़ाते-शब्दवाला एवं टेढ़ा हुआ होगा, तो स्वयं वे शङ्कर भगवान् प्रमाण ( साक्षी ) हैं । ( जब मैं भगवान् शङ्करजी के सामने उत्साहपूर्वक अपने मुखों को काटने लगा तब मेरा एक मुख भी दुःख से व्याकुल नहीं हुआ । इस विषय में भगवान् शङ्कर ही साक्षी हैं ) । शार्दूलविक्रीडित छन्द है ॥ ३५ ॥

**अङ्गद**—रावण ! जगत् के भय को मिटानेवाले वे प्रसिद्ध राम के बाण क्या चन्द्रहास के कुल में उत्पन्न हुए हैं ? मूर्ख ! जिनसे कटे तुम्हारे सिर फिर उत्पन्न नहीं होंगे, जैसे कि शङ्कर के ( पूजन-रूपी ) उत्सव में उत्पन्न हुए थे । ( भाव यह है—शङ्कर के पूजन का काम आरम्भ होने पर उस उत्सव में चन्द्रहास खड्ग से कटे हुए तुम्हारे सिर जिस प्रकार शङ्करजी के वर के प्रसाद से फिर उत्पन्न हुए

लूनानि यैस्तव शिरांसि पुनः प्ररोह-
मेष्यन्ति मूढ ! नहि धूर्जटिपर्वणीव ॥ ३६ ॥

रावणः—[ सक्रोधं चन्द्रहासमादाय ] रे ! अपसरापसर मेऽग्रतः, न पुनः कथाशेषं करिष्यामि ।

अङ्गदः—[ गन्तुमिच्छन् ]

रे नक्तञ्चरराज ! मुञ्च सहसा देवीमिमां मैथिलीं
मिथ्या किं निजपौरुषस्य नटनप्रागल्भ्यमभ्यस्यसि ? ।

---

यैः = वाणैः, लूनानि=छिन्नानि, तव=रावणस्य, शिरांसि = मस्तकानि, धूर्जटिपर्वणि, धूर्जटेः = शङ्करस्य पर्व=पूजनरूप उत्सवः तस्मिन्, इव=यथा, पुनः = भूयः, प्ररोहम् = उत्पत्तिं, न एष्यन्ति = न प्राप्स्यन्ति । ( अयं भावः—शङ्करपूजनकार्ये आरब्धे सति तस्मिन्नुत्सवे चन्द्रहासेन च्छिन्नानि ते शिरांसि शङ्करवरप्रसादाद्यथा पुनरुत्पन्नानि, तथेदानीं रामस्य वाणैश्छिन्नानि तानि पुनर्नोत्पत्स्यन्ते । अव्यर्था रामबाणाश्चन्द्रहाससदृशा व्यर्था न भवन्तीति । ) वसन्ततिलका वृत्तम् ॥ ३६ ॥

अङ्गदवचनं श्रुत्वा क्रोधपूर्णो रावणः खड्गं गृहीत्वा तं हन्तुमुद्यतो ब्रूते—**रे** इति । अपसरापसरेति द्विरुक्तिस्त्वरायाम् । शीघ्रं पलायस्वेत्यर्थः, अग्रतः सांमुख्यात् । 'न पुनः कथाशेषं करिष्यामी'त्यस्यार्थः प्रागुक्तः ।

ततो गन्तुमिच्छतोऽङ्गदस्य वाचं प्रस्तौति कविः—**रे नक्तंचरराजेति** । रे नक्तञ्चरराज ! = अये राक्षसानां स्वामिन् ! इमां = रामभार्यां, मैथिलीं देवीं = सीतां देवीं, सहसा = अविचार्य, मुञ्च = परित्यज । मिथ्या = असत्यं, निजपौरुषस्य = स्वीयपुरुषार्थस्य, नटनप्रागल्भ्यं = नर्तने प्रौढिं, किम् = किमर्थम् , अभ्यस्यसि = पुनः पुनः परिशीलयसि ? किन्नरगणैः = तुरङ्गवदनानां किम्पुरुषाणां समूहैः, उद्गीतदो-

---

इस प्रकार इस समय रामचन्द्रजी के बाणों से कटे वे सिर फिर उत्पन्न नहीं होंगे। अव्यर्थ रामबाण चन्द्रहास के समान व्यर्थ नहीं होते । ) वसन्ततिलका छन्द है॥३६॥

रावण—[ क्रोध के सहित खड्ग लेकर ] अरे बन्दर ! मेरे सामने से जल्दी हट जाओ, नहीं तो तुम्हें कथाशेष ( मरा हुआ ) कर दूँगा ।

अङ्गद—[ जाने की इच्छा करता हुआ ]

ऐ राक्षसराज ! बिना विचार किये राम की पत्नी सीता को छोड़ दो. झूठ अपने पौरुष के नचाने की प्रौढि का अभ्यास क्यों कर रहे हो ? इस ( लङ्का में

एतां पश्यसि किं न किन्नरगणैरुद्गीतदोर्विक्रमां
सेनां वानरभर्तुरुद्भटभुजस्तम्भाग्रभीमां पुरः ? ॥ ३७ ॥

अपि च ।

शिरोभिर्मा देवीः शिव इव न ते दास्यति पुनः
प्रबन्धं पश्याब्धेः सरस इव कैलाससुभट !।

---

विक्रमाम् , उद्गीतः = उच्चैः स्वरेण गीतः दोर्विक्रमः = बाहुपराक्रमो यस्यास्ताम् , उद्भटभुजस्तम्भाग्रभीमाम् , उद्भटानां = वीराणां भुजाः = बाहव एव स्तम्भाः तेषाम् अग्रैः = अग्रभागैः भीमां = भयङ्करीम् , एतां = लङ्कास्थितां, वानरभर्तुः = सुग्रीवस्य, सेनां = चमूं , पुरः = अग्रभागे, किं न पश्यसि = नावलोकयसि किमु ? अर्थादवश्यं पश्यसि । ( रावण ! कमपि विचारमकृत्वा रामाय सीतां प्रत्यर्पय । असत्यं निजपौरुषं न प्रशंस । इयं सुग्रीवसेना, यदीयभुजपराक्रमः किन्नरैर्गीयते स्म या चात्युन्नतैर्भुजैर्भयं दर्शयन्ती दृश्यते, नूनं ते नाशं करिष्यतीति भावः।) शार्दूलविक्रीडितं वृत्तम् ॥३७॥

अपि च = अन्यच्च ।

**शिरोभिरिति** । शिरोभिः=मस्तकैः, मा देवीः=न क्रीड, शिरश्छेदरूपां द्यूतक्रीडां न कुरुष्वेत्यर्थः । पुनः = भूयः छेदानन्तरं, शिव इव = शङ्करो यथा, कोऽपीति शेषः, ते = तुभ्यं, न दास्यति = न वितरिष्यति । सरसः = कासारस्य, इव = यथा, अब्धेः= समुद्रस्य, प्रबन्धं = प्रकर्षेण बन्धं, पश्य = जानीहि । हे कैलाससुभट, कैलासे = कैलासविषये कैलासोत्थापन इति यावत् सुभटः = वीरः तत्सम्बुद्धौ, ( परं ) मम = मे

---

स्थित ) सुग्रीव की सेना को—जिसकी भुजाओं का पराक्रम किन्नरों द्वारा ऊँचे-स्वर में गाया गया है और जो वीरों के ( ऊपर उठे हुए ) बाहुरूपी स्तम्भों के अग्रभागों से भयङ्कर है—सामने नहीं देख रहे हो ? अर्थात् अवश्य देख रहे हो । ( रावण ! कुछ भी विचार न कर रामचन्द्रजी को सीता लौटा दो, झूठ अपने पुरुषार्थ की प्रशंसा न करो । यह सुग्रीव की सेना–जिसके बाहुओं का पराक्रम किन्नरों से गाया जाता है और जो ऊँचे ऊँचे बाहुओं से भय दिखलाती हुई दिखाई पड़ रही है–निश्चय तुम्हारा नाश करेगी, यह भाव है । ) शार्दूलविक्रीडित छन्द है ॥

और भी—

मस्तकों की बाजी न लगाओ, फिर ( कटने के बाद ) शङ्कर के समान (कोई) तुम्हें न देगा । झील के समान समुद्र का बन्धन समझो । हे कैलासपर्वत ( के उठाने में ) वीर ! ( किन्तु ) मेरे पिता के बाहुओं की विजय होने पर जिसका यश

हितं तु त्वां ब्रूमो मम जनकदोर्दण्डविजये
चलत्कीर्तिस्तम्भ ! त्यज कमलबन्धोः कुलवधूम् ॥ ३८ ॥

किञ्च ।

आदौ येन सुबाहुमुख्यपिशिताहारैः समं ताडका
नीता नाशमतश्च भग्नवदनश्रीस्ते स्वसाऽकारि च ।

---

अङ्गदस्य, जनकदोर्दण्डविजये, जनकस्य = पितुर्वालिनः दोर्दण्डयोः = भुजयोः विजये = जये सति, चलत्कीर्तिस्तम्भ ! चलन्ती = आन्दोल्यमाना कीर्तिरेव = यश एव स्तम्भः यस्य तत्सम्बुद्धौ, त्वां तु = त्वां पुनः, हितं = हितकारकं वचः, ब्रूमः = कथयामः । ( यत् ) कमलबन्धोः = सूर्यस्य, कुलवधूं, कुलस्य = वंशस्य वधूः = स्नुषा तां सीतामिति यावत्, त्यज = मुञ्च । ) शिरांसि न कर्तय, पुनस्तानि नोत्पत्स्यन्ते । समुद्रस्य बन्धो नाम स्वल्पं कार्यम् । त्वं कैलासपर्वतोत्थापने वीरोऽसि, परं वालिभुजाभ्यां पराजयेन ते कीर्तिर्नष्टा । इदानीं सूर्यवंशीयां रामवधूं सीतां मुञ्चेति तेऽस्माकं हितोपदेशोऽस्तीति भावः । ) अत्र 'मम जनकदोर्दण्डविजये, कमलबन्धोः कुलवधूम्' इत्युभयत्र समासाभावो नापेक्षणीयः । शिखरिणी वृत्तमिदम् ॥ ३८ ॥

किञ्च = अपि च ।

**आदाविति** । येन = रामेण, आदौ = प्रथमं, सुबाहुमुख्यपिशिताहारैः, सुबाहुः = तन्नामकः मुख्यः = प्रधानं येषां ते—पिशितं = मांसम् आहारः = भोजनं येषां ते—सुबाहुमुख्याश्च ते पिशिताहाराश्च तैः = सुबाहुप्रभृतिभिः राक्षसैः, समं = सार्धं, ताडका = तन्नामिका राक्षसी, नाशं = क्षयं, नीता = प्रापिता, अतश्च = अस्माच्च कार्यात्, अनन्तरमिति शेषः, ते = तव, स्वसा = भगिनी शूर्पणखा, ( लक्ष्मणद्वारा

---

रूपी खम्भा चलायमान हो रहा है ऐसे हे रावण ! तुमसे फिर हम हितकारक बात कहते हैं ( कि ) सूर्य के कुल की बहू ( सीता ) को छोड़ दो । ( भाव यह है—सिर न कटवाओ, फिर वे उत्पन्न नहीं होंगे । समुद्र का बँधना एक छोटा सा काम है । तुम कैलास पर्वत के उठाने में वीर हो, पर वाली की भुजाओं द्वारा हार होने से तुम्हारा यश नष्ट हो गया है । अब सूर्यवंश की रामपत्नी सीता को छोड़ दो—यह तुम्हें हमारा हितकारक उपदेश है । ) शिखरिणी छन्द है ॥ ३८ ॥

और भी—

जिन्होंने पहले सुबाहु आदि राक्षसों के साथ ताड़का राक्षसी को नष्ट किया

हत्वा येन वने भवद्भटबटून्बद्धोऽम्बुधिश्च क्षणा-
त्कर्ता त्वन्निधनस्य सैष समरे भ्रान्तिस्तवाद्यापि का ? ॥ ३९ ॥

अपि च ।

रे रे राक्षस ! मा स्म शङ्करवरभ्रान्त्या विभाङ्क्षीर्नयं

---

नासिकां कर्तयित्वेति शेषः ) भग्नवदनश्रीः, भग्ना = नष्टा वदनश्रीः = मुखस्य कान्तिर्यस्याः सा, अकारि = कृता । येन = रामेण, वने = अरण्ये, भवद्भटवटून्, भवतः = तव रावणस्य भटाः = योधाः वटवः = बालका इवेति तान्, हत्वा = संहृत्य, क्षणात् = स्वल्पेन समयेन, अम्बुधिः = समुद्रश्च, बद्धः = बन्धनं प्रापितः । सैषः = सोऽयं प्रसिद्धो रामः, 'सैष' इत्यत्र 'सोऽचि लोपे चेत्पादपूरणम्' इत्यनेन सुलोपः, समरे = युद्धे, त्वन्निधनस्य=तव नाशस्य, कर्ता=रचयिष्यन् ( अस्ति ), भविष्यदर्थे तृन् प्रत्ययः, तव = ते, अद्यापि = इदानीमपि, का भ्रान्तिः = को भ्रमः ? ( श्रीरामचन्द्रेण यथा सुबाहुप्रभृतीन् बहून् राक्षसान् हत्वा बाला इव ते वीरा भटा अपि विनाशिताः समुद्रश्च बन्धनं नीतस्तथैवाधुना युद्धे तवापि नाशोऽवश्यं करिष्यते। तवायं भ्रमोऽस्ति यत्स मां न मारयितुं शक्यति। अभिमानमूलकं मिथ्याभ्रममेनं दूरीकुरुष्वेति भावः । ) शार्दूलविक्रीडितं वृत्तम् ॥ ३९ ॥

अपि च = अन्यच्च ।

**रे रे** इति । रे रे राक्षस = भो भो निशाचर ! शङ्करवरभ्रान्त्या, शङ्करस्य =

---

और इसके अनन्तर तुम्हारी बहिन शूर्पणखा को (लक्ष्मण के द्वारा नाक कटवाकर)-नष्ट है मुख की कान्ति जिसकी—ऐसा बना दिया और जिन्होंने तुम्हारे योधा रूपी बालकों को मारकर क्षणभर में समुद्र को बाँध डाला, वे प्रसिद्ध रामचन्द्रजी युद्ध में तुम्हारा नाश करने वाले हैं । तुम्हें अब भी कौन सा भ्रम है ? ( भाव यह है—श्रीरामचन्द्रजी ने जिस प्रकार सुबाहु आदि बहुतसे राक्षसों को मारकर बालकों के समान तुम्हारे वीर भटों का भी विनाश किया तथा समुद्र को बन्धन में डाल दिया, उसी प्रकार अब युद्ध में तुम्हारा भी नाश वे अवश्य करेंगे । तुम्हें यह भ्रम है कि वे मुझे नहीं मार सकेंगे । अभिमान से होने वाले इस झूठे भ्रम को दूर कर दो । ) शार्दूलविक्रीडित छन्द है ॥ ३९ ॥

अरे अरे राक्षस । शिवजी के वर के भ्रम से नीति का भङ्ग न करो । मूर्ख ! शिवजी तभी कुपित हो गए जब सीता के हरण करने में ( तुम्हारी ) बुद्धि हुई ।

रुष्टो मूढ ! तदैव यन्मतिरभूत्सीतापहारे हरः ।
नो चेदिष्टकपालमण्डनभृताप्याखण्ड्य मुण्डावलीं
भक्त्या ढौकितमीश्वरेण किमहो ! प्रत्यर्पितं प्राभृतम् ॥ ४० ॥

अपि च । जानीमहे महेश्वरपरिचरणप्रसङ्गपरमार्थमपि भवतः । मिथ्याभिमानिन् !

---

महादेवस्य यो वरः = अभीष्टप्राप्तिरूपः तस्य भ्रान्त्या = भ्रमेण, नयं = नीतिं, मा स्म विभाङ्क्षीः = न विनाशय, हे मूढ = हे मूर्ख ! तदैव = तस्मिन्नेव काले, हरः = शङ्करः, रुष्टः = क्रुद्धः, अभूत् = अभवत्, अर्थात्त्वयि, यत् = यदेत्यर्थः सीतापहारे= सीताहरणविषये, तवेति शेषः, मतिः = बुद्धिः, अभूत् । नोचेत्=अन्यथा, अहो = आश्चर्यम् , मुण्डावलीं = मस्तकानां पङ्क्तिम् , आखण्ड्य = खण्डयित्वा, भक्त्या = परयाऽनुरक्तया, त्वयेति शेषः, ढौकितं = दत्तं, प्राभृतम् = उपहारः, इष्टकपालमण्डन-भृतापि, इष्टं = प्रियं कपालं = नरमुण्डमेव मण्डनम् = अलङ्कारं बिभर्तीति तेनापि, ईश्वरेण = शङ्करेण, किम्=किमर्थं, प्रत्यर्पितं = पुनर्दत्तम् । ( कपालप्रियोऽपि शङ्करस्त्वयोपहृतानि शिरांसि यत्पुनस्ते प्रत्यर्पयति स्म, तेन सिद्धं यच्छङ्करस्त्वयि रुष्टः । अत्र कारणं त्वत्कृतं सीतापहरणमेव । अतः 'शङ्करो मयि प्रसन्नोऽस्ती'ति भ्रान्तिं धारयन्नीतिविरुद्धं कार्यं मा कार्षीरिति भावः । शार्दूलविक्रीडितं वृत्तम् ॥४०॥

अपि चेति । 'जानीमहे' इत्यात्मनेपदप्रयोगोऽपाणिनीयः । महेश्वरपरिचरण-प्रसङ्गपरमार्थमपि, महेश्वरपरिचरणप्रसङ्गस्य = शिवस्य सेवायाः प्रस्तावस्य परमार्थः = यथार्थस्वरूपं तमपि, मिथ्याभिमानिन् = असत्याभिमानशालिन् !

---

नहीं तो, आश्चर्य है कि—मस्तकों की पंक्ति को काट कर ( तुम्हारे द्वारा ) भक्ति से दिये हुये उपहार को, प्रिय कपाल-रूपी भूषण को धारण करने वाले शिवजी ने भी, क्यों लौटा दिया । ( भाव यह है—कपाल के प्रेमी शङ्कर जी ने भी तुम्हारे भेंट दिये हुए मस्तकों को जो फिर तुम्हें लौटा दिया—इससे सिद्ध है कि शङ्कर जी तुम पर कुपित हैं । इसमें कारण—तुम्हारा किया हुआ सीता का हरण ही है । अतः 'शङ्कर मुझ पर प्रसन्न हैं' ऐसे भ्रम को धारण करते हुए नीति के विरुद्ध कार्य न करो । ) शार्दूलविक्रीडित छन्द है ॥ ४० ॥

और भी, तुम्हारे शङ्कर-सेवा प्रस्ताव के सच्चे स्वरूप को हम जानते हैं । हे झूठा अभिमान रखने वाले !

आः पौलस्त्य ! किमेवमुत्पुलकितः स्वस्मै मुहुः श्लाघसे
यत्तोषं गमितः स्वमौलिकमलैर्बालेन्दुमौलिर्मया
प्राचीनं हि विरञ्चिपञ्चमशिरश्छेदापवादं स्मरन्
देवोऽदत्त वरं तवापि कृपया कायव्रतं कुर्वतः ॥ ४१ ॥

**आः पौलस्त्येति ।** आः पौलस्त्य = पुलस्त्यगोत्रापत्य ! हे रावण !, उत्पुलकितः, उत्=उच्चैः पुलकः=रोमाञ्चः सञ्जातोऽस्य सः उन्नतरोमाञ्चयुक्तः सन्, 'तदस्य सञ्जात'मितीतच् , मुहुः = पुनः पुनः, एवं = वक्ष्यमाणप्रकारेण, स्वस्मै = स्वात्मने, द्वितीयार्थे चतुर्थीयं चिन्त्या, किं श्लाघसे = किमर्थं प्रशंससि ? यत्, मया = रावणेन, स्वमौलिकमलैः = निजमस्तकरूपैः पद्मैः, बालेन्दुमौलिः, बालेन्दुः = बालश्चन्द्रः कलारूपः मौलौ = मस्तके यस्य तादृशः शिवः, तोषं = प्रसन्नतां, गमितः = प्रापितः । हि = निश्चयेन, देवः = शिवः, प्राचीनं = पुरातनं, विरञ्चिपञ्चमशिरश्छेदापवादं, विरञ्चेः = ब्रह्मणः पञ्चमशिरसः = पञ्चसंख्यापूरणस्य मस्तकस्य यः छेदः = कर्तनं स एव अपवादः = कलङ्कः तं, स्मरन्=आध्यायन्, कृपया = दयया, कायव्रतं=शरीरप्रदानरूपं नियमं, कुर्वतः=रचयतः, तव=रावणस्यापि, चतुर्थ्यर्थे षष्ठी, वरम्=अभीष्टार्थम्, अदत्त = ददौ । ( 'अहं किल स्वशिरोभिः कमलैरिव पूजयन् भगवन्तं शङ्करं प्रसाद्य पुनः शिरांसि लब्धवा'नित्येवमात्मप्रशंसनं ते व्यर्थम् । मन्ये, मस्तकसमर्पणेन पराक्रमेण शङ्करस्त्वयि नातुष्यत् , किन्तु तादृशं साहसमवलोक्य ते करुणया स्वस्यापि पुराणस्य पञ्चमब्रह्मशिरश्छेदर्जनितस्य कलङ्कस्य स्मरणेन तत्पापप्रायश्चित्तविधित्सयेव

ऐ रावण ! अधिक रोमाञ्चयुक्त होते हुए फिर फिर इस प्रकार अपनी प्रशंसा क्यों कर रहे हो—कि मैंने अपने मस्तकरूपी कमलों से शिवजी को सन्तुष्ट कर लिया । निश्चय ही, ब्रह्मदेव का पाँचवा सिर काटने के पुराने कलङ्क का स्मरण करते हुए शिवजी ने कृपा करके शरीर ( देने ) का व्रत करते हुए तुम्हें भी, वरदान दिया । ( भाव यह है—'कमलों के समान अपने मस्तकों से पूजा करते हुए मैंने भगवान् शङ्करजी को प्रसन्न कर फिर मस्तकों को प्राप्त किया' इस प्रकार तुम्हारी अपनी प्रशंसा व्यर्थ है । मैं समझता हूँ, मस्तक समर्पण करना—इस पराक्रम से शङ्करजी तुम पर प्रसन्न नहीं हुए, किन्तु तुम्हारा वैसा साहस देखकर दया से तथा अपने भी पुराने ब्रह्मदेव का पाँचवां सिर काटने से उत्पन्न हुए कलङ्क के स्मरण से, उस पाप का प्रायश्चित्त करने की इच्छा से मानों शङ्करजी ने

शृणु रे दशवदन ! वदनविवरविनिर्गतवाग्विभीषिकया न बिभीमो वयम्।

[ इत्यभिधाय निष्क्रान्तोऽङ्गदः । ]

[ नेपथ्ये । ]

त्वयि त्रिभुवनाधीशे हन्ति वानरवाहिनी ।
सज्जो भव महावीर ! वीरत्वं क्व गतं तव ? ॥ ४२ ॥

---

तुभ्यं भग्नशिरसेऽपि पुनः शिरःसमुत्पत्तिकरं वरं प्रदत्तवानित्याशयः । 'कन्यामपि सरस्वतीं स्त्रीबुद्धया पश्यतो ब्रह्मणः पञ्चमं शिरस्तत्पुत्रो रुद्ररूपः शङ्करश्च कर्त' इति कथात्रानुसन्धेया। ) शार्दूलविक्रीडितं वृत्तम् ॥ ४१ ॥

शृणु रे इति । वदनविवरविनिर्गतवाग्विभीषिकया, वदनविवरात् = मुखरन्ध्रात् विनिर्गता=निष्क्रान्ता या वाक्=वाणी तया या विभीषिका भयप्रदर्शनं तया, विभीमः= भयं प्राप्नुमः । वाचा यद्भयं प्रदर्शयसि तदस्मभ्यं भयप्रदायकं भवितुं नार्हतीत्यर्थः।

इत्युक्तवतोऽङ्गदस्य ततः प्रस्थानं सूचयति—इत्यभिधायेत्यादि ।

अथ दूतकार्यं समाप्य रावणसमीपादङ्गदे प्रस्थिते वानरसेनयोपद्रुताः क्षतविक्षताङ्गा राक्षसास्तद् वृत्तं नेपथ्याभ्यन्तरात्स्वामिनं रावणं निवेदयन्ति—

त्वयीति । त्रिभुवनाधीशे = त्रैलोक्यस्याधिपतौ, त्वयि = रावणे सति, वानरवाहिनी = वानराणां सेना, हन्ति = हिनस्ति, अस्मानिति शेषः । हे महावीर ! हे महापराक्रमशालिन् ! सज्जः = सन्नद्धः, भव = जायस्व, तव = ते, वीरत्वं = पराक्रमः, क्व = कुत्र, गतं = प्रस्थितम् ? ( त्रिभुवनाधीश्वरोऽपि स्वसेवकान् यद्येवं वानरैर्विना-

---

मस्तक काटने वाले तुम्हें भी फिर मस्तक उत्पन्न करने वाले वर को प्रदान किया । 'कन्या सरस्वती को भी स्त्रीबुद्धि से देखते हुए ब्रह्मा का पाँचवा सिर उनके पुत्र रुद्ररूप शङ्कर ने काटा ।' यह कथा यहाँ समझनी चाहिए । ) शार्दूलविक्रीड़ित छन्द है ४१

सुनो रावण ! मुख के छेद से निकली वाणी द्वारा भय दिखलाने से हम डरते नहीं अर्थात् वाणी से जो कुछ भय दिखता रहे हो वह हमें भयदायक नहीं हो सकता ।

[ ऐसा कहकर अङ्गद चला गया । ]

[ नेपथ्य में ]

तीनों लोकों के स्वामी आपके रहते वानरों की सेना ( हम लोगों को ) मार रही है । ऐ बड़े पराक्रमी ! तैयार हो जाइए । आपकी वीरता कहाँ गई ? (तीनों लोकों के अधिपति आप भी यदि इस प्रकार वानरों द्वारा अपने सेवकों का

रावणः—[ सौत्सुक्यम् ] अये ! अस्मदनुजीविनो वध्यमाना भृशं चुम्बायन्ते ।

[ ततः प्रविशन्ति विक्षताङ्गा निशाचरभटाः । ]

निशाचराः—

वानरैर्यदि वध्याः स्मस्त्वयि नाथेऽप्यसाम्प्रतम् ।
त्वमपि प्राणिते बुद्धिं शाश्वतीं मा कृथा वृथा ॥ ४३ ॥

---

शयति भवांस्तर्हि भवतो वीरता व्यर्था, अतो वीरतां प्रदर्श्य रक्षत्वस्मानिति भावः । ) अनुष्टुब् वृत्तम् ॥ ४२ ॥

नेपथ्योक्तं श्रुत्वा रावणः सोत्कण्ठमाह—सौत्सुक्यमिति । अस्मदनुजीविनः = अस्मदीयाः सेवकाः राक्षसाः, वध्यमानाः = हन्यमानाः सन्तः, भृशम् = अत्यन्तं, बुम्बायन्ते = बुम्बाशब्दं कुर्वन्ति । व्याकुलतामसमर्थताञ्चात्मनो दर्शयन्तीत्यर्थः ।

नेपथ्यान्तरतः पूर्वोक्तां स्त्रीयां दुर्दशां प्रकाशितवतां तेषां भयाकुलानां राक्षसानां प्रवेशमाह—ततः प्रविशन्तीत्यादि । विक्षताङ्गाः = आहतशरीराः ।

प्रविष्टानां राक्षसानां वचनं दर्शयति—

वानरैरिति । त्वयि = भवति, नाथे = स्वामिनि सत्यपि, यदि = चेत्, वयं, वानरैः = मर्कटैः, वध्याः स्मः = व्यापादनीया भवामः, ( तर्हि इदम् ) असाम्प्रतम् = अयुक्तम् । त्वमपि = भवानपि, वृथा = व्यर्थं, प्राणिते = जीवने, शाश्वतीं = स्थिरां, बुद्धिं = मतिं, मा कृथाः = न कुरु । ( शत्रुप्रहारेण सेवकेषु मृतेषु नूनं स्वामिनापि मर्तव्यमेवेति भावः । ) अनुष्टुब् वृत्तम् ॥ ४३ ॥

---

नाश करा रहे हैं, तो आपकी वीरता व्यर्थ है; अतः वीरता दिखाकर आप हम लोगों की रक्षा कीजिए । ) । अनुष्टुप् छन्द है ॥ ४२ ॥

रावण—[ उत्कण्ठा के साथ ] ओह ! हमारे सेवक मारे जाते हुए बहुत बोम मार रहे हैं अर्थात् अपनी व्याकुलता और असमर्थता दिखला रहे हैं ।

[ तब घायलशरीर के राक्षस वीर सैनिक प्रवेश करते हैं । ]

राक्षस—आप स्वामी के रहते भी यदि हम लोग वानरों से मारे जाते हैं ( तो यह ) अनुचित है । आप भी व्यर्थ जीवन में अटल बुद्धि न रखिए । ( शत्रुओं के प्रहार से सेवकों के मरने पर निश्चय स्वामी को भी मर जाना चाहिए । ) अनुष्टुप् छन्द है ॥ ४३ ॥

रावणः—[ सकोपं प्रहस्तं त्वरितमाहूय ]

सन्नह्यतां सपदि राक्षसवीरसेना
के नाम रामहतकस्य वनौकसोऽमी ? ।
जागर्ति यन्मम भुजे ननु चन्द्रहासः
श्यामीकृतामरवधूमुखचन्द्रहासः ॥ ४४ ॥

[ पुनर्विकटं परिक्रमन् । ] अरावणमरामं वा जगदद्य भविष्यति ।

---

साक्षेपनिन्दापूर्णं राक्षसोक्तं वचः श्रुत्वा रावणः क्रोधेन तूर्णं प्रहस्तमाहूय कथयति-

सन्नह्यतामिति । सपदि = शीघ्रं, राक्षसवीरसेना = वीरराक्षसानां चमूः, सन्नह्यताम् = सज्जा क्रियताम् । अमी = उपद्रवकारकाः, रामहतकस्य = नीचस्य रामस्य, वनौकसः, वनमेव ओकः = गृहं येषां ते वानराः, के नाम = वराकाः किं कर्तुं समर्थाः । यत् = यस्मात्कारणात्, ननु = निश्चयेन, मम = रावणस्य, भुजे = बाहौ, श्यामीकृतामरवधूमुखचन्द्रहासः, श्यामीकृतः = मलिनीकृतः अमरवधूनां = देवस्त्रीणां मुखचन्द्रस्य = वदनेन्दोः हासः = हास्यं विकासः येन तादृशः, चन्द्रहासः = खड्गः, जागर्ति = जागरूको वर्तते । ( सेनासन्नाहेन युद्ध्वा सर्वं समीकरिष्याम्यहम् । को नाम खेदस्यावसर इत्यर्थः । ) वसन्ततिलका वृत्तम् ॥ ४४ ॥

पुनरिति । [विकटं = भयङ्करं, परिक्रमन् = परिभ्रमन् । परिक्रमन्निति प्रयोगश्चिन्त्यः । ] अरावणमित्यादि । अरावणं = रावणरहितम्, अरामं = रामरहितम् । स्वयमहं मरिष्यामि रावणं वा मारयिष्यामीत्यर्थः ।

---

रावण—[ क्रोध के साथ, शीघ्रता से, प्रहस्त को बुलाकर ]

शीघ्र वीर राक्षसों की सेना तैयार करो । ये ( उपद्रवकारी ) नीच राम के बन्दर क्या हैं ! ( बिचारे क्या कर सकते हैं ? ) क्योंकि, मेरी भुजा में निश्चय वह चन्द्रहास है, जिसने देवस्त्रियों के मुखचन्द्र की हँसी को मलिन बना दिया है । ( अर्थात् सेना की तैयारी से लड़कर मैं सब ठीक कर डालूँगा ! खेद का कौन अवसर है ? ) वसन्ततिलका छन्द है ॥४४॥

[ फिर भयङ्कर-रूप से घूमता हुआ ] आज संसार बिना रावण अथवा बिना राम का हो जायगा ।

[ इति वदन्निष्क्रान्तः । ]

[ ततः प्रविशतो हेमाङ्गदचित्राङ्गदौ गगनवीथीसञ्चारिणौ गन्धर्वौ । ]

**हेमाङ्गदः—सखे ! चित्राङ्गद !**

**दिव्यास्त्रैर्भूर्भुवःस्वस्त्रितयडमरकोड्डामरैर्योधयित्वा**
**लूनोत्क्षिप्तैः शिरोभिर्दशभिरधिनभो दर्शितैकादशार्कः ।**
**काकुत्स्थेनावकीर्णो निजविशिखशिखायोगपीठोपहूतो**
**ब्रह्मास्त्रेणाधिशेते रजनिचरपतेर्वीरशय्यां कबन्धः ।। ४५ ।।**

---

ततस्तस्य निर्गमनं दर्शयति—**इति वदन्निति** ।

एतावत्पर्यन्तं कविरङ्गदस्य दूतकार्यं दर्शितवान्। इदानीं तत्कार्यं समाप्य निर्गतेऽङ्गदे रावणवधरूपं मुख्यं कार्यं 'दूराह्वानं वधो युद्ध'मित्यादिनिषेधेन दर्शयितुं नोचितमित्यतः परस्परसंवादरूपेण गगनसञ्चारिगन्धर्वद्वयोक्तिद्वारेण तद्दर्शयितुमुद्यतो हेमाङ्गदचित्राङ्गदनामानौ द्वौ गन्धर्वौ प्रवेशयति कविः—**तत** इत्यादिना । गगनवीथीसञ्चारिणौ = आकाशमार्गेण सञ्चरणशीलौ ।

तत्र हेमाङ्गदश्चित्राङ्गदमाह—**सखे** इति ।

तथा हि—**दिव्यास्त्रै**रिति । काकुत्स्थेन=रामचन्द्रेण, भूर्भुवःस्वस्त्रितयडमरकोड्डामरैः, भूः भुवः स्वः=एतन्नामका लोकाः तेषां त्रितये=त्रये अर्थात् त्रिषु लोकेषु यः डमर एव डमरकः = विप्लवः, स्वार्थे कः, तस्मिन् उड्डामराः=श्रेष्ठाः निपुणाः तैः, त्रिभुवनोपद्रवकारकैरित्यर्थः, दिव्यास्त्रैः=अलौकिकैरायुधैः, योधयित्वा=युद्धं कारयित्वा, लूनोत्क्षिप्तैः, पूर्वं लूनानि = छिन्नानि पश्चात् उत्क्षिप्तानि = ऊर्ध्वं क्षिप्तानि तैः, दशभिः = दशसंख्याकैः, शिरोभिः=मस्तकैः, अधिनभः=आकाशे, विभक्त्यर्थेऽव्ययीभावः, दर्शितैकादशार्कः, दर्शिताः=साक्षात्कारिताः एकादश = एकादशसंख्याकाः

---

[ ऐसा कहता हुआ निकल गया । ]

[ तब आकाश-मार्ग में घूमने वाले हेमाङ्गद चित्राङ्गद नाम के दो गन्धर्व प्रवेश करते हैं । ]

**हेमाङ्गद**—तीनों लोकों के बीच उथल पुथल मचाने में श्रेष्ठ ( निपुण ) दिव्य आयुधों से युद्ध कराकर श्रीरामचन्द्रजी द्वारा काटे गये तथा ऊपर आकाश में फेंके गये हुए दस मस्तकों से जिसने ग्यारह सूर्य दिखला दिये, तथा ( उसके अनन्तर ) नीचे पृथ्वी पर फेंका गया हुआ एवं अपने ( राम के ) बाणों के अग्रभागरूपी योगासन पर आवाहित ( स्थापित ) किया गया हुआ ( वह ) रावण का बिना

**चित्राङ्गदः**—सखे ! अनया गगनवीथ्या बहोः कालात्सञ्चरावहे निर्भयमेवम् ।

[ नेपथ्ये कलकलः । ]

**यद्वक्त्राणां दशानामिव दश ककुभः शासितुं सृष्टिरासी-**
**द्विंशत्या यश्च दोर्भिर्दशगुणितमिव प्राप्तवान्वीर्यवर्ष्म ।**

---

अर्कः=सूर्याः येन सः, अवकीर्णः=अधःक्षिप्तः, ब्रह्मास्त्रेण=तन्नामकेन परमास्त्रेण निजविशिखशिखायोगपीठोपहूतः, निजविशिखानां = स्ववाणानां शिखाः = अग्रभागा एव योगपीठं=योगासनं तस्मिन् उपहूतः = आवाहितः स्थापित इति यावत्, रजनिचरपतेः = राक्षसराजस्य रावणस्य, कबन्धः = चेष्टायुक्तं मस्तकरहितं शरीरं, वीरशय्यां = वीरासनं मृत्युशयनम्, 'अधिशीङ्स्थासा'मिति कर्मत्वम्, अधिशेते = आश्रयति । ( दिव्यास्त्रयोजितैर्बाणैर्दशापि मस्तकानि छित्त्वा रामेण रावणस्य शिरोहीनकबन्धरूपशरीरं भूमौ पातितम् अर्थाद् रावणो मृत इत्याशयः । ) स्रग्धरा छन्दः ४५

इत्थं हेमाङ्गदवचो निशम्य चित्राङ्गदः प्राह—**सखे** इति । गगनवीथ्या=आकाशमार्गेण, सञ्चरावहे = भ्रमणं कुर्वः, 'समस्तृतीयायुक्तात्' इत्यात्मनेपदम् ।

ततो रामचन्द्रकृतं रावणस्य कबन्धरूपत्वं लोककोलाहलद्वारा जवनिकाभ्यन्तरतो दर्शयति कविः—**नेपथ्य** इति ।

तमेव कोलाहलप्रकारमाह—

**यद्वक्त्राणा**मिति । दश = दशसंख्याकाः, ककुभः = दिशाः, शासितुं = शिक्षयितुमिव, दशानां = दशसंख्याकानां, यद्वक्त्राणां=यस्य रावणस्य मुखानां, सृष्टिः = रचना, आसीत्=अभूत् । च=अपि च, यः = रावणः, विंशत्या = विंशतिसंख्याकैः,

---

माथे का शरीर वीरासनरूपी मृत्युशयन का आश्रय ले रहा है । ( दिव्य अस्त्रों से युक्त किये गये बाणों द्वारा दसों मस्तकों को काटकर रामचन्द्रजी ने रावण का धड़ पृथ्वी पर गिरा दिया अर्थात् रावण मर गया । ) स्रग्धरा छन्द है ॥ ४५ ॥

**चित्राङ्गद**—मित्र ! इस आकाश-मार्ग से हम दोनों इस प्रकार बहुत समय से बिना भय के घूम रहे हैं ।

[ नेपथ्य में कोलाहल ]

दस दिशाओं को शिक्षा देने के लिए मानों जिसके दस मुखों की सृष्टि हुई, और जिसने बीस बाहुओं से मानों दसगुना पराक्रम-रूपी शरीर पाया, इन्द्र

लङ्केन्द्रः सञ्जितेन्द्रः समरभुवि जवाज्जानकीवल्लभेन
ज्योतिर्दीप्रैः क्षुरप्रैः स खलु विरचितो निर्विबन्धः कबन्धः ४६

चारणः—शृणु हेमाङ्गद ! चित्राङ्गद ! चित्रमिवावलोकय ।

हेलाखण्डितचण्डहेमहरिणैर्बाणैः कुलं रक्षसां
शेषीभूतविभीषणं गुणनिधौ कृत्वापि रामे स्थिते ।

---

'विंशत्याद्याः सदैकत्वे' इत्येकवचनमिदम्, दोर्भिः = भुजैः, दशगुणितमिव = दशसंख्याभिरावृत्तमिव, वीर्यवर्ष्म = पराक्रमरूपं शरीरं, प्राप्तवान् = लब्धवान् । खलु = निश्चये, सञ्जितेन्द्रः, सञ्जितः = सम्यग् जितः इन्द्रः = शक्रः येन तादृशः, सः = प्रसिद्धः, लङ्केन्द्रः = लङ्काधिपती रावणः, समरभुवि = युद्धभूमौ, जानकीवल्लभेन = सीतापतिना रामचन्द्रेण, जवात् = वेगेन, ज्योतिर्दीप्रैः, ज्योतिषा = तेजसा दीप्राः = प्रकाशमानाः तैः, क्षुरप्रैः = बाणविशेषैः, निर्विबन्धः, निर्गताः विशेषेण बन्धाः = सन्धिबन्धनानि यस्य सः, कबन्धः = चेष्टायुक्तमस्तकहीनशरीररूपः, विरचितः = कृतः । ( रामेण बाणैर्हत्वा रावणस्य शरीरं शिरोविहीनं कृतमित्यर्थः । ) स्रग्धरा वृत्तम् ॥ ४६ ॥

ततः प्रविश्य कश्चिच्चारणस्तौ गन्धर्वौ कथयति—शृणु इति । चित्रमिवावलोकय=आश्चर्यमिव पश्य ।

तदेवाश्चर्यं दर्शयति—

हेलाखण्डितेति । हेलाखण्डितचण्डहेमहरिणैः, हेलया = विलासेन क्रीडयेति यावत् खण्डितः = विनाशितः चण्डः = उग्रः हेमहरिणः = सुवर्णमृगो यैस्तादृशैः, बाणैः = शरैः, रक्षसां = राक्षसानां, कुलं = वंशं, शेषीभूतविभीषणं, शेषीभूतः = अवशिष्टः विभीषणः यस्मिंस्तादृशं, कृत्वा = विधाय, गुणनिधौ = गुणानाम् आधारे,

---

को जीतने वाले उस रावण को लड़ाई के मैदान में सीतापति रामचन्द्रजी ने वेग से चमकीले बाणों द्वारा सन्धिबन्धनों से रहित–बिना माथे के शरीर वाला–बना दिया । ( अर्थात् राम ने बाणों से मारकर रावण का शरीर बिना सिर का कर दिया । ) स्रग्धरा छन्द है ॥ ४६ ॥

चारण—सुनो हेमाङ्गद ! चित्राङ्गद ! आश्चर्य सा देखो ।

भयङ्कर सोने का मृग जिनसे खेलवाड़ में नष्ट कर दिया गया उन बाणों द्वारा, राक्षसों का कुल–बचा है विभीषण जिसमें–ऐसा करके गुणों के आधार श्रीराम-

प्रत्युज्जीवितशङ्कया यमजितो लङ्कापतेः कातरै-
र्नो मुक्ताः कुसुमस्रजो न च सुरैरास्फालितो दुन्दुभिः ॥ ४७ ॥

**चित्राङ्गदः**—[ सचमत्कारं हेमाङ्गदं प्रति । ] सखे ! हेमाङ्गद ! ईदृगेवाद्भुतरसैकभाजनं भवानीपतिभक्तिभासुरः प्रबलप्रतापभरप्रणमितसकलसुरासुरो वीरवीरोत्तंसः खल्वयं नक्तञ्चरचक्रवर्ती ॥ यः किल पुरा पुरारिपरिचर्यावसरे—

---

रामे = रामचन्द्रे, स्थितेऽपि सति = कृतकार्येऽपि सञ्जाते, यमजितः, यमम् = अन्तकं जयतीति तस्य, लङ्कापतेः=रावणस्य, प्रत्युज्जीवितशङ्कया, प्रत्युज्जीवितस्य = पुनरुज्जीवनस्य शङ्कया = सन्देहेन, कातरैः = व्याकुलैः, सुरैः = देवैः, कुसुमस्रजः = पुष्पाणां मालाः, नो मुक्ताः = न पातिताः, दुन्दुभिश्च = भेरी च, न आस्फालितः = न ताडितः । ( रामेण विभीषणमेकं विहाय सकलं राक्षसकुलं संहृतम् , तथाप्येवं विलक्षणेन कर्मणा प्रसन्ना देवाः पुष्पवृष्टिं न चक्रुर्न च भेरीं वादयामासुः, तस्य कारणं रावणस्य पुनरुज्जीवनशङ्कैव तेषामिति भावः । ) शार्दूलविक्रीडितं वृत्तम् ॥४७॥

ततश्चित्राङ्गद आश्चर्येण सह हेमाङ्गदमभिधत्ते—**सखे** इति ।

अद्भुतरसैकभाजनम् = अद्भुतरसस्य एकं पात्रम् विलक्षणकार्यकारीत्यर्थः, भवानीपतिभक्तिभासुरः, भवानीपतेः = शिवस्य भक्त्या परयाऽनुरक्त्या भासुरः = प्रकाशमानः, प्रबलप्रतापभरप्रणमितसकलसुरासुरः, प्रबलः=बलविशेषशाली यः प्रतापः = प्रभावः तस्य भरेण = भारेण प्रणमिताः = नम्रीकृताः सकलाः = सर्वे सुराऽसुराः = देवाश्च दानवाश्च येन सः, वीरवीरोत्तंसः, वीरवीरेषु = महावीरेषु उत्तंसः = भूषणस्वरूपः, नक्तञ्चरचक्रवर्ती = राक्षसानां मध्ये सार्वभौमः । पुरारिपरिचर्या-

---

चन्द्रजी के ( कृतकार्य ) होने पर भी, यमराज को जीतनेवाले रावण के फिर जी उठने के सन्देह से व्याकुल देवों ने फूलों की मालाएँ नहीं छोड़ी और न नगाड़ा बजाया । ( भाव यह है—राम ने एक विभीषण को छोड़ कर सारे राक्षसकुल का संहार किया, तिस पर भी ऐसे विलक्षण काम से प्रसन्न हुए देवताओं ने फूलों की वर्षा नहीं की और न नगाड़ा बजाया, इसका कारण—रावण के फिर जी उठने की उनकी शङ्का ही है । ) शार्दूलविक्रीडित छन्द है ॥ ४७ ॥

**चित्राङ्गद**—[ आश्चर्य के साथ हेमाङ्गद के प्रति ] मित्र हेमाङ्गद ! इस प्रकार ही अद्भुत रस का एक पात्र, शङ्कर की भक्ति से प्रकाशमान तथा जिसने ( अपने )

बिभ्राणं दशवक्त्रतां क्रममिलत्पञ्चाननीपूजया
यः शर्वं स्वमिव स्वमीश्वरमिति ज्ञात्वा मुखैः पञ्चभिः।
शम्भोरेव शिरःसु तं निजकरं व्यापारयन्वारितः
पार्वत्या, कथमप्यहो! न स दशग्रीवो गिरां गोचरः॥ ४८॥

-वसरे, पुरारेः = त्रिपुरासुरशत्रोः शिवस्य परिचर्यायाः = उपासनायाः अवसरे=समये।

बिभ्राणमिति। यः = रावणः, पूर्वत्र गद्ये प्रयुक्तत्वादत्र पुनर्यत्पदमिदं व्यर्थमेव। क्रममिलत्पञ्चाननीपूजया, पञ्चानाम् आननानां = मुखानां समाहारः पञ्चाननी, क्रमेण एकद्व्यादिस्वरूपेण मिलन्ती = उपलभ्यमाना या पञ्चाननी तस्याः पूजया = सपर्यया, दशवक्त्रतां, दश वक्त्राणि = मुखानि यस्य तस्य भावस्तत्ता तां, बिभ्राणं = दधानं, शर्वं = शिवं, स्वमिव = आत्मना तुल्यं रावणसदृशमिति यावत्, (तथा) पञ्चभिः मुखैः = अवशिष्टैः पञ्चवदनैः, स्वम्=आत्मानं रावणम्, ईश्वरं = शिवम्, इति = एवं, मत्वा = अवबुध्य, शम्भोरेव=शिवस्यैव, शिरस्सु= मस्तकेषु, तं = खड्गयुक्तं, निजकरं = स्वहस्तं, व्यापारयन् = प्रेरयन्, पार्वत्या = गिरिजया वारितः = निरुद्धः अभूत्। अहो = आश्चर्यम्, सः = पूर्वोक्तकार्यकर्ता, दशग्रीवः, दश ग्रीवाः = कन्धराः यस्यासौ रावणः, कथमपि = केनापि प्रकारेण, गिरां = वचसां, गोचरः = विषयः, न=नास्ति, सर्वथाऽवर्णनीय इत्यर्थः। (अयं भावः– शङ्करं पूजयता यदा किल रावणेन क्रमेणात्मनः पञ्चाननानि छित्त्वा शङ्करस्य मुखानां समीपे स्थापितानि, तदा दशमुखवत्त्वा'च्छङ्करो रावणोऽस्ती'ति पञ्चमुखवत्त्वाच्च 'शङ्करो-

अत्यन्त बलशाली प्रभाव के भार से सारे देव–दानवों को झुका दिया, ऐसा यह बड़े बड़े वीरों में श्रेष्ठ, राक्षसों का चक्रवर्ती राजा रावण है। जो कि पहले शङ्कर जी की पूजा के समय—

क्रम से मिलते हुए पाँच मुखों की पूजा से दस मुख के स्वरूप को धारण करते हुए शङ्कर को अपने जैसा, तथा पाँच मुखों से अपने को शङ्कर ऐसा समझा और शङ्कर के ही मस्तकों पर खड्गयुक्त अपने हाथ को चलाते हुए पार्वती से रोका गया। आश्चर्य, वह रावण किसी प्रकार वचनों का विषय नहीं है अर्थात् सब प्रकार से अवर्णनीय है। (भाव यह है—शङ्कर जी की पूजा करते हुए जब रावण ने क्रम से अपने पाँच मुख काटकर शङ्कर जी के मुखों के समीप रख दिये, तब दस–मुख होने से 'शङ्कर रावण हैं' तथा पाँच–मुख होने से 'मैं शङ्कर हूँ' ऐसा वह समझा और शङ्कर जी के ही मस्तकों पर प्रहार करते हुए उस रावण को

[ कर्मप्राबल्यमीक्षमाणः । सखेदम् । ] सखे ! हेमाङ्गद ! पश्य पश्य ।

इह खलु विषमः पुरातनानां भवति हि जन्तुषु कर्मणां विपाकः ।
हरशिरसि शिरांसि यानि रेजुः शिव शिव, तानि लुठन्ति गृध्रपादैः ॥४९॥

**हेमाङ्गदः**—सखे ! नातिचित्रमेतत् । 'यतो धर्मस्ततो जयः'

---

ऽहमस्मी'ति मेने । अथ च तं शङ्करस्यैव मस्तके प्रहर्तुमुद्यतं पार्वती वारयामासेति रावणस्य विचित्रं चरितमवर्णनीयमेवेति । ) शार्दूलविक्रीडितं वृत्तम् ॥ ४८ ॥

**कर्मप्राबल्य**मिति । कर्मप्राबल्यम् , कर्मणां = पूर्वकृतानां कर्मणां प्राबल्यं = प्रबलताम् , ईक्षमाणः = पश्यन् , सखेदं = खेदपूर्वकं, कथयतीति शेषः । तदेवाह— **सखे** इत्यादि ।

**इहे**ति । खलु हि-इति शब्दौ निश्चये, इह = अत्र संसारे, पुरातनानां = पूर्वजन्मसमुद्भूतानां, कर्मणां = कार्याणां, विपाकः = परिणामः, जन्तुषु = प्राणिषु, विषमः = भयानकः, भवति = जायते । यानि, शिरांसि = मस्तकानि अर्थाद्रावणस्य, हरशिरसि = शङ्करस्य मस्तकेषु, जातावेकत्वम् , रेजुः = शोभन्ते स्म, शिव शिवेति खेदे, कष्टं कष्टमित्यर्थः, तानि = मस्तकानि, गृध्रपादैः = गृध्रपक्षिणां चरणैः, लुठन्ति= विलुलितानि भवन्तीति यावत् । ( शिवशिरःसु राजतामपि रावणशिरसां पुनश्छिन्नानां भूमौ पतनं 'पूर्वकृतकर्मानुसारमेव प्राणिनामुत्कर्षापकर्षौ भवत' इत्येवं सूचयत्यत्र । ) पुष्पिताग्रा वृत्तमिदम् ।

तदुपरि हेमाङ्गदो ब्रूते—**सखे** इति , अतिचित्रं = बह्वाश्चर्यकरम् । **यतो धर्म**

---

पार्वती ने रोका, अतः रावण का विचित्र चरित वर्णन करने के योग्य नहीं है । ) शार्दूलविक्रीडित छन्द है ॥ ४८ ॥

[ कर्मों की प्रबलता देखते हुए खेद के साथ ] मित्र हेमाङ्गद ! देखो, देखो—

निश्चय ही, संसार में पहले के कर्मों का परिणाम प्राणियों पर भयानक होता है । जो रावण के मस्तक शङ्करजी के मस्तकों पर विराजमान होते थे, अत्यन्त दुःख है, कि वे गिद्धों के पैरों से ठुकराये जाते हैं । ( शङ्कर के मस्तकों पर विराजमान होते हुए भी फिर कटे हुए रावण के मस्तकों का पृथ्वी पर गिरना—यह सूचित करता है कि, 'पहले के किये हुए कर्म के अनुसार ही प्राणियों की उन्नति तथा अवनति होती है' । ) पुष्पिताग्रा छन्द है ॥ ४९ ॥

**हेमाङ्गद**—मित्र ! इसमें अधिक आश्चर्य नहीं है । 'जहाँ धर्म वहाँ विजय'

इत्ययं सत्य एव शास्त्रप्रवादः । अतोऽस्मिन्नर्थे शरीरादिभिः पुण्या-ऽपुण्यकारिणामायतिर्दर्शिता । अत्र रावण एवोदाहरणमापद्यते । तथाहि ।

---

इति । यतः = यत्सकाशाद् धर्मः भवति, ततः = तत्सकाशाद्, जयः = विजयः भवति । सप्तम्यर्थे वा तसिल् प्रत्ययः, 'यत्र धर्मः तत्र जय' इत्यर्थः । शास्त्रप्रवादः = शास्त्राणां प्रकृष्टं वचनम् । अस्मिन्नर्थे = 'धर्मकर्ता विजयं प्राप्नोती'ति विषये । 'शरीरादिभि'रित्यादिपदेन वाङ्मनश्च गृह्यते, आयतिः = उत्तरः कालः । अत्र = अस्मिन्विषये, आपद्यते = भवति ।

अत्रेदं विज्ञातव्यम्—'यद्यपि रावणेन शङ्कराय स्वीयानि मस्तकान्युपहाररूपेण समर्पितानि तथापि पूर्वतनकर्मप्रभावेण तानि मस्तकानि गृध्रैराक्रान्तानी'ति वदता चित्राङ्गदेन रावणस्य पापं प्रदर्शितम् । 'चित्राङ्गदवचने बहुलमाश्चर्यं नास्ती'ति कथयता हेमाङ्गदेन तु 'धर्मेण विजयो भवती'ति शास्त्रं प्रमाणीकृत्य मनसा वाचा कर्मणा च पुण्यपापे कुर्वतां तादृशमेवोत्तरकालं प्रदर्शितवता रावण एव तदुदाहरणत्वे-नोपन्यस्तः । अतः 'शारीरं कष्टं सोढ्वापि शिरश्छेदं कुर्वाणो रावणः पुण्यं कृतवानिति तस्योत्तरकालः शुभः' इत्येवं रावणस्य पुण्यं प्रतिपादितम् । तथाहि=तदेवाह—

---

यह शास्त्र का विशिष्ट वचन सत्य ही है । इसलिए इस विषय में शरीरादिकों से, अर्थात् शरीर वाणी तथा मन से पुण्य-पाप करनेवालों का उत्तर ( भविष्यत् ) काल दिखला दिया गया । इस विषय में रावण ही उदाहरण होता है ।

यहाँ यह समझना है—'यद्यपि रावण ने शङ्कर को अपने मस्तक उपहार-रूप में समर्पित कर दिये थे, तो भी पूर्वकर्मों के प्रभाव से उन मस्तकों पर गृध्र पक्षियों का आक्रमण हुआ' ऐसा कहते हुए चित्राङ्गद ने रावण का पाप दिखलाया । 'चित्राङ्गद की बात में बहुत आश्चर्य नहीं है' ऐसा कहते हुए हेमाङ्गद ने तो 'धर्म से विजय होती है' इस प्रकार शास्त्र को प्रमाणित करके मन वचन तथा कर्म से पुण्य-पाप करनेवालों का वैसा ही उत्तर ( भविष्यत् ) काल दिखलाते हुए उसके उदाहरण के रूप में रावण ही को रक्खा । इसलिए 'शरीर का कष्ट सह करके भी शिरश्छेद करते हुए रावण ने पुण्य किया—इससे उसका उत्तर ( आनेवाला ) काल अच्छा है' इस प्रकार रावण का पुण्य बतलाया । वही कहा जाता है—

वपुर्मुख्यं वित्तं व्ययितमिह धर्मार्थमवनौ
खलु स्फारीभूतं वलति विपरीतं नहि पुनः ।
बलिं कुर्वञ्शंभोः पलभुजपतिः सत्रिभुवनां
शिरःश्रेणीं लेभे ननु विगमयन्नुत्पलकृते ।। ५० ।।

[ नेपथ्ये ]

---

**वपुर्मुख्य**मिति । इह अवनौ = अस्यां पृथिव्यां, धर्मार्थं = पुण्यकर्मणे, व्ययितं = नियोजितं, वपुः = शरीररूपं, मुख्यं = प्रधानं, वित्तं=धनं, खलु=निश्चयेन, स्फारीभूतं = विस्तृतं वृद्धिं गतं सत्, वलति, आत्मनेपदं युज्यते, 'कलिवली कामधेनू' इत्युक्तत्वात् 'फलती'त्यर्थः करणीयः, पुनः = भूयः, विपरीतं = विरुद्धम् , अधर्मार्थं व्ययितमिति यावत् , नहि = न फलतीत्यर्थः । उदाहरणमाह—**बलि**मिति । ननु = निश्चयेन, शम्भोः = शिवस्य, बलिं = पूजां, कुर्वन् = विदधानः, पलभुजपतिः, पलं = मांसं भुञ्जते इति पलभुजाः = राक्षसाः तेषां पतिः = स्वामी रावणः, 'पलभुज' इत्यत्र 'मूलविभुजादिभ्यः कः' इत्यनेन मूलविभुजादेराकृतिगणत्वात् कप्रत्ययः, उत्पलकृते = कमलार्थं, शिरःश्रेणीं = मस्तकानां पङ्क्तिं, विगमयन् = विनाशयन् , सत्रिभुवनां = लोकत्रयेण सहितां, तामिति शेषः, लेभे = प्राप । ( धर्मार्थमर्पितं शरीरं महत्फलं दिशति । यथा रावणः शङ्करपूजायै कमलस्थाने शिरांसि समर्पितवांस्तेन पुण्येन शिरोभिः सह त्रिभुवनाधिपत्यमपि प्राप्तवानित्यर्थः । ) शिखरिणी वृत्तमिदम् ॥ ५० ॥

पुनर्नेपथ्योक्तं प्रदर्शयति—

---

इस पृथ्वी पर धर्म-कर्म में लगाया हुआ शरीररूपी मुख्य धन वृद्धिङ्गत होता हुआ फलीभूत होता है, अधर्म में लगाया हुआ फलीभूत नहीं होता । शङ्कर की पूजा करते हुए रावण ने कमलों के लिए ( अपने ) मस्तकों की पङ्क्ति को नष्ट करते हुए तीनों लोकों के सहित ( उसको ) पाया । ( भाव यह है—कि धर्म के लिए दिया हुआ शरीर महान् फल देता है । जैसे रावण ने शङ्कर की पूजा के लिए कमलों के स्थान पर मस्तकों को अर्पित कर दिया—इस पुण्य से मस्तकों के साथ तीनों लोकों का राज्य भी पाया । ) शिखरिणी छन्द है ॥ ५० ॥

[ नेपथ्य में ]

बाणैर्लाञ्छितकेतुयष्टिशिखरो मूर्छानमत्सारथि-
मांसास्वादनलुब्धगृध्रविहगश्रेणीभिरासेवितः।
रक्षोनाथकबन्धगाढपतनक्षुण्णाक्षदण्डो हयै-
र्हेषित्वा स्मृतमन्दुरास्थितिहृतैर्लङ्कां रथो नीयते॥ ५१॥

---

बाणैरिति। बाणैः = शरैः, लाञ्छितकेतुयष्टिशिखरः, लाञ्छितं = कलङ्कितं केतुयष्टेः = ध्वजदण्डस्य शिखरं = शिरोभागः यस्य सः, अत्र 'बाणै'रितिव्यस्तपद-प्रयोगो न शोभनः, मूर्छानमत्सारथिः, मूर्छया = चेतनाया अभावेन नमन् = अधो-गच्छन् सारथिः = सूतः रथचालकः यस्यासौ, मांसास्वादनलुब्धगृध्रविहगश्रेणीभिः, मांसस्य = पिशितस्य आस्वादने = रसग्रहणे लुब्धानां = लोलुपानां गृध्रविहगानां = गृध्रनामकपक्षिणां श्रेणीभिः = पङ्क्तिभिः, आसेवितः = सर्वतो व्याप्तः, रक्षोनाथकबन्ध-गाढपतनक्षुण्णाक्षदण्डः, रक्षोनाथस्य = निशाचरपते रावणस्य यः कबन्धः = शिरो-हीनं शरीरं तस्य गाढं = दृढतया सवेगं यत् पतनम् = अधःपतिः तेन हेतुना क्षुण्णः = चूर्णितः अक्षदण्डः = चक्रद्वयसंयोजको मध्यवर्ती दण्डः यस्य सः, रथः = स्यन्दनः, स्मृतमन्दुरास्थितिहृतैः, स्मृता = स्मरणगोचरीकृता या मन्दुरायाम् = अश्वशालायां स्थितिः = पूर्वकालिको निवासः तया हृतैः = चालितैः, हयैः = अश्वैः, हेषित्वा = हेषाशब्दं कृत्वा, लङ्कां = तन्नाम्नीं राजधानीं, नीयते = प्राप्यते। (ध्वजा-ग्रविकलं मूर्छितसारथिं गृध्रपक्षिभिराक्रान्तं रावणकबन्धपातवेगेन चूर्णितचक्रदण्डं रथं पूर्वतनवाजिशालानिवासस्मरणेन चलन्तोऽश्वा हेषन्तो लङ्कां नयन्तीत्यर्थः।)। शार्दूलविक्रीडितं वृत्तम्॥ ५१॥

---

जिसका ऊपरी भाग बाणों से कलङ्कित (आक्रान्त) है (तथा) सारथि चेतना न होने के कारण झुक रहा है, मांस का स्वाद लेने के लोभी गृध्रपक्षियों की पङ्क्तियों से जो सेवित (व्याप्त) है तथा जिसके पहिये का डंडा रावण के धड़ के जोर से गिरने से टूट गया है, वह रथ स्मरण में लाये हुए घुड़साल के निवास से चलाये गये घोड़ों द्वारा हिनहिनाकर लङ्का में ले जाया जा रहा है। (सारांश यह है— ध्वजा के ऊपरी भाग से रहित, मूर्छित-सारथि वाले, गृध्रपक्षियों से घिरे हुए तथा रावण का धड़ गिरने के वेग से टूटे पहिये के डंडे वाले रथ को, पहले के घुड़साल-निवास के स्मरण से चलते हुए घोड़े हिनहिनाकर लङ्का में ले जा रहे हैं।) शार्दूल-विक्रीडित छन्द है॥ ५१॥

[ पुनर्नेपथ्ये ]

सर्वा ! गीर्वाणवध्वो ! व्रजत निजगृहान् , बद्धमाधोरण ! द्राक्
स्वर्गेभस्तम्भमाला नय सुरकरिणं, यामिका ! यात देवाः ! ।
भूयो दिव्यद्रुमाणां भवतु ननु वने नन्दने संनिवेशो
द्वारि क्षिप्तं यदैन्द्रे दशवदनशिरः किङ्करैरङ्गदस्य ॥ ५२ ॥

---

पुनर्नेपथ्योक्तं वर्णयति—

**सर्वा** इति । सर्वाः = सकलाः, गीर्वाणवध्वः = हे देवाङ्गनाः ! निजगृहान् = स्वं सदनं स्वर्गं, गृहशब्दः पुंसि बहुत्वे च प्रयुज्यते, व्रजत = गच्छत । आधोरण = हे हस्तिपक ! बद्धं = लङ्कायां प्राप्तबन्धनं, ऐरावतम् = इन्द्रवाहनं गजराजं, द्राक्=शीघ्रं, स्वर्गेभस्तम्भमालाः, स्वर्गे = सुरसदने ये इभाः = गजाः तेषां ये स्तम्भाः = बन्धनस्थानानि तेषां मालाः = पङ्क्तीः, नय = प्रापय । यामिकाः = प्रहरिणः द्वारपालाः !, हे देवाः = हे सुराः ! यात = ( स्वर्गं प्रति ) प्रस्थानं कुरुत । ननु = निश्चयेन, भूयः = पुनः, नन्दने = नन्दनाख्ये, वने = उपवने, दिव्यद्रुमाणाम् = अलौकिककल्पवृक्षाणां, सन्निवेशः = स्थितिः, भवतु = जायताम् । यद् = यस्मात्कारणात्, अङ्गदस्य = अङ्गदनामकस्य दूतस्य, किङ्करैः = सेवकैर्वानरैः, दशवदनशिरः = रावणस्य मस्तकं, जातावेकवचनम्, ऐन्द्रे = इन्द्रसम्बन्धिनि, द्वारे = द्वारप्रदेशे, क्षिप्तं = पातितम् । ( श्रीमद्राघवबाणै रावणे गतप्राणे सञ्जाते, तदीयशिरोजातमिन्द्रद्वारे वानरैः क्षिप्तमित्यतः सानन्दं देवाङ्गनाभिरैरावतेन सुरैः कल्पवृक्षैश्च स्वं स्वं स्वर्गस्थानं पुनरलङ्क्रियतामिति भावः । ) स्रग्धरा वृत्तमिदम् ॥ ५२ ॥

---

[ फिर नेपथ्य में ]

हे सब देवाङ्गनाओ ! अपने घर स्वर्ग को जाओ । हे महावत ! ( लङ्का में ) बँधे हुए ऐरावत हाथी को शीघ्रता से स्वर्ग के हाथियों के खंभों की पङ्क्तियों में ले जाओ । हे प्रहरी देवो ! ( स्वर्ग ) जाओ । निश्चय, फिर नन्दन वन में अलौकिक कल्पवृक्षों का निवास हो । जिस कारण, अङ्गद के सेवक ( बन्दरों ने ) रावण का सिर इन्द्र के द्वार पर फेंक दिया । ( अर्थात् श्रीरामचन्द्रजी के बाणों से रावण के प्राणहीन होने पर, उसके मस्तकों का समूह इन्द्र के द्वार पर बन्दरों ने फेंक दिया — इसलिए देवाङ्गनाएँ, ऐरावत हाथी, देवता तथा कल्पवृक्ष अपने अपने स्वर्गस्थान को फिर सुशोभित करें । ) स्रग्धरा छन्द है ॥ ५२ ॥

अपि च ।

रणरसिकसुरस्त्रीमुक्तमन्दारदामा
स्वयमयमवतीर्णो लक्ष्मणन्यस्तहस्तः ।
विरचितजयशब्दो बन्दिभिः स्यन्दनाङ्का-
द्दिनकरकुललक्ष्मीवल्लभो रामभद्रः ॥ ५३ ॥

**रामः**—[ पुष्पकाधिरूढोऽयोध्यामागच्छन्सीतां प्रति लङ्कारणभूमिं दर्शयन् । ]

---

इदानीं विजयश्रियालङ्कृतस्य रामस्य रथादवतरणं दर्शयति—

**रणरसिके**ति । रणरसिकसुरस्त्रीमुक्तमन्दारदामा, रणे = युद्धे, रसिकाः = अनुरागयुक्ताः याः सुरस्त्रियः = देवाङ्गनाः ताभिः मुक्तानि=पातितानि वृष्टानीत्यर्थः मन्दारदामानि = मन्दारनामककल्पवृक्षपुष्पमालाः यस्मिन् सः, बन्दिभिः = स्तुतिपाठकैः, विरचितजयशब्दः, विरचितः = कृतः जयशब्दः = विजयध्वनिः यस्य तादृशः, दिनकरकुललक्ष्मीवल्लभः, दिनकरकुलस्य = सूर्यवंशस्य, लक्ष्म्याः = श्रियाः वल्लभः = प्रियः स्वामी, लक्ष्मणन्यस्तहस्तः, लक्ष्मणे = भ्रातुर्लक्ष्मणस्योपरि न्यस्तः= स्थापितः हस्तः = करो येन तादृशः, अयं = पूर्वोक्तः विजयी, रामभद्रः = श्रीमान् रामचन्द्रः, स्वयं = स्वात्मना, अवतीर्णः = रथादवरोहणं कृतवान् । ( विजयश्रीविभूषितस्य देवाङ्गनाप्रसूनमाल्यवृष्टिसम्पूजितस्य स्तुतिपाठकैर्गीतस्य सूर्यवंशभूषामणेः श्रीमतस्तत्रभवतो रामचन्द्रस्य लक्ष्मणस्कन्धे हस्तमारोप्य रथादवतरणं सञ्जातमित्यर्थः । ) मालिनी वृत्तम् ॥ ५३ ॥

---

अपि च = और भी ।

ये विजयी श्रीरामचन्द्रजी—जिन पर युद्ध में प्रेम रखने वाली देवाङ्गनाओं ने मन्दार (कल्पवृक्ष) पुष्प की मालाएँ बरसाईं, स्तुति-पाठकों द्वारा जिनकी विजयध्वनि की गई, सूर्यवंश की लक्ष्मी के स्वामी, भाई लक्ष्मण पर हाथ रखे हुए—स्वयं रथ की गोद ( मध्यभाग ) से उतरे । ( अर्थात् विजयश्री से विभूषित, देवाङ्गनाओं की पुष्पमाला-वृष्टि से पूजे गए, स्तुतिपाठकों से गाने गए, सूर्यवंश के भूषणमणि श्रीरामचन्द्रजी का-लक्ष्मणजी के कन्धे पर हाथ रख कर-रथ से उतरना हुआ । ) मालिनी छन्द है ॥ ५३ ॥

**राम**—[ पुष्पक विमान में बैठे अयोध्या आते हुए सीता को लङ्का की युद्धभूमि दिखलाते हुए ]

अत्रासीत्फणिपाशबन्धनविधिः शक्त्या भवद्देवरे
गाढं वक्षसि ताडिते हनुमता द्रोणाद्रिरत्राहृतः ।
दिव्यैरिन्द्रजिदत्र लक्ष्मणशरैर्लोकान्तरं लम्भितः
केनाप्यत्र मृगाक्षि ! राक्षसपतेः कृत्ता च कण्ठाटवी ॥ ५४ ॥

---

रथादवरुह्य पुष्पकं विमानमारुह्यायोध्यामागच्छन् रामः सीतां प्रति तानि तानि युद्धस्थलानि प्रदर्शयन्नाह—

**अत्रास**ादिति । हे मृगाक्षि ! मृगस्य = हरिणस्य अक्षिणी = नेत्रे इव ( चपले ) अक्षिणी यस्यास्तत्सम्बुद्धौ हे हरिणलोचनसमानलोचने !, अत्र = अस्मिन् स्थाने, फणिपाशबन्धनविधिः, फणिपाशेन = नागरूपेण पाशेन बन्धनविधिः = बन्धनस्य रचना, आसीत् = समभूत् । भवद्देवरे, भवत्याः = सीतायाः देवरे = स्वामिनो भ्रातरि लक्ष्मणे, शक्त्या = मेघनादस्यायुधविशेषेण, वक्षसि = उरःप्रदेशे, गाढं = दृढं यथा स्यात्तथा, ताडिते = आहते सति, अत्र = अस्मिन्प्रदेशे, हनुमता=पवननन्दनेन वानरेण, द्रोणाद्रिः = द्रोणनामकपर्वतः, आहृतः=आनीतः । अत्र = इह स्थाने, इन्द्रजित् = इन्द्रजेता रावणपुत्रो मेघनादः, दिव्यैः = अलौकिकैः, लक्ष्मणशरैः = लक्ष्मणस्य बाणैः, लोकान्तरं=परलोकं, लम्भितः = अर्पितः । अत्र च = अस्मिन् स्थले च, केनापि=मयेत्यर्थः, राक्षसपतेः = रावणस्य, कण्ठाटवी=कण्ठरूपं वनं, कृत्ता=छिन्ना । ( सारांशस्तु—अत्रात्र स्थलेषु नागपाशबन्धनद्रोणपर्वतानयनमेघनादनिषूदनरावणविध्वंसनात्मकानि तानि तानि कार्याणि सञ्जातानीति । अत्र-मया 'इत्यनुक्त्वा 'केनापी'ति वचनेन रामस्य विनयशीलवत्वं सूच्यते । शार्दूलविक्रीडितं वृत्तम् ॥ ५४ ॥

---

हरिण के नेत्रों के समान चञ्चल नेत्रवाली ऐ सीते ! यहाँ पर नाग-फाँस से बन्धन हुआ था, ( मेघनाद के ) शक्ति नामक अस्त्र के द्वारा, छाती पर गहरे में तुम्हारे देवर मेरे भाई लक्ष्मण के ताडित होने पर, यहाँ श्रीहनुमान् के द्वारा द्रोण पर्वत लाया गया था, यहाँ पर इन्द्र को जीतनेवाला मेघनाद लक्ष्मण के अलौकिक बाणों से दूसरे लोक में पहुँचाया गया और यहाँ किसी ने रावण का कण्ठरूपी जंगल काटा था । ( सारांश यह है-इस इस स्थान में नागफाँस में बँधना, द्रोण पहाड़ लाना, मेघनादवध, रावणसंहाररूपी वे वे काम हुए । यहाँ 'मैंने' ऐसा न कहकर 'किसी ने' ऐसा कहने से रामचन्द्रजी की विनयशीलता सूचित होती है । ) शार्दूलविक्रीडित छन्द है ॥ ५४ ॥

इति नवरसगीर्भिर्जानकीं प्रीणयन्वः
पुलकितललिताङ्गः पैतृकं प्राप्य धाम।
सुखयतु कुलराज्यं पालयन्नुत्कपौरः
प्रकटितबहुभद्रः सर्वदा रामभद्रः ॥ ५५ ॥

स्वनिर्मितं किञ्चन गद्यपद्यबन्धं कियत्प्राक्तनसत्कवीन्द्रैः।

---

इत्थमत्र नाटकीयवस्तुसमाप्तौ भरतवाक्यस्वरूपमाशीर्वचनात्मकमन्तिमं पद्यं प्रदर्शयति कविः—

**इतीति**। इति = अनेन प्रकारेण, नवरसगीर्भिः, नवो रसः = नूतन आनन्दः यासु ताभिः, गीर्भिः = वचनैः, जानकीं=सीतां, प्रीणयन् = सन्तोषयन्, पुलकितललिताङ्गः, पुलकितानि = आनन्दसूचकरोमाञ्चयुक्तानि ललितानि = सुन्दराणि अङ्गानि= अवयवाः यस्य सः, उत्कपौरः, उत्काः = उत्कण्ठिताः पौराः = नागरिकाः यत्र सः, प्रकटितबहुभद्रः, प्रकटितानि = प्रकाशितानि बहूनि = भूयांसि भद्राणि मङ्गलानि येन सः, रामभद्रः = श्रीरामचन्द्रः, पैतृकं = पितृसम्बन्धि, धाम = स्थानं, प्राप्य = लब्ध्वा, कुलराज्यं = वंशक्रमागतं नृपत्वं, पालयन्=रक्षन्, सर्वदा = सर्वस्मिन् काले, वः= युष्मान् सामाजिकान्, सुखयतु = सुखयुक्तान् करोतु। (सीतां प्रतीत्थमुपर्युक्तं वचो वदन् विजयी प्रसन्नो राजा क्षेमङ्करः श्रीरामचन्द्रः सभ्यानां सुखाय भूयादिति भावः।) मालिनी वृत्तम् ॥ ५५ ॥

कविरिदानीं स्वनाम नाटकस्वरूपञ्च निर्दिशन्नुपसंहरन्नाह—

**स्वनिर्मित**मिति। स्वनिर्मितं, स्वेन = आत्मना निर्मितं = कृतं, गद्यपद्यबन्धं, गद्यं च पद्यं च गद्यपद्ये तयोर्बन्धः तं गद्यपद्यमयीं रचनां, किञ्चन = स्वल्पम्, अन्यय-

---

इस प्रकार नूतन रस-भरी बातों से सीता को प्रसन्न करते हुए रोमाञ्चयुक्त सुन्दर अङ्ग वाले रामचन्द्रजी—जिनके विषय में नगरवासी लोग उत्कण्ठित हैं और जिन्होंने सदा बहुत से मङ्गलों को प्रकाश रूप में लाया है—पिता की गद्दी पाकर कुल के राज्य का पालन करते हुए तुम सामाजिकों को आनन्दित करते रहें। (सीता के प्रति इस प्रकार ऊपर की बात कहते हुए विजयी प्रसन्न कल्याणकारी राजा श्रीरामचन्द्रजी सभ्य सामाजिकों के सुख के लिए हों—यह भाव है।) मालिनी छन्द है ॥ ५५ ॥

कुछ अपनी बनाई हुई गद्य पद्यों की रचना तथा कुछ पुराने अच्छे कवियों

प्रोक्तं गृहीत्वा प्रविरच्यते स्म रसाढ्यमेतत्सुभटेन नाट्यम् ॥ ५६ ॥

इति सुभटकविप्रणीतं दूताङ्गदं नाम च्छायानाटकं समाप्तम् ।

समाप्तोऽयं ग्रन्थः ।

---

मिदम्, प्राक्तनसत्कवीन्द्रैः, प्राक्तनाः = पुरातनाः ये सत्कवीन्द्राः = श्रेष्ठाः महाकवयः तैः, प्रोक्तं = कथितं, कियत् = किञ्चित्, गृहीत्वा = आदाय, सुभटेन = तन्नामकेन कविना, रसाढ्यं, रसेन = आनन्दमयेन चमत्कारेण आढ्यं = पूर्णम्, एतत् = इदं, नाट्यं = नाटकं, प्रविरच्यते स्म = निरमीयत । ( सुभटनिर्मितेऽस्मिन् रसपूर्णे नाटके परेषां कवीनामपि किञ्चित्सङ्गृहीतमस्तीति भावः । ) उपजातिर्वृत्तम् ॥ ५६ ॥

ग्रन्थसमाप्तिं दर्शयति—इतीति ।

श्रीमद्वैक्रमवर्षे षडन्तरिक्षाम्बरेक्षणप्रमिते ।
अधिपौषपौर्णमासि प्राकट्यं प्राप्तयाऽनया लोके ॥ १ ॥
दूताङ्गदचन्द्रिकया ग्रन्थग्रन्थीस्तमांसि दमयन्त्या ।
आलोकिताः पदार्था भवन्तु, सन्तो वहन्तु सन्तोषम् ॥ २ ॥

**इति श्रीवेतालानन्तरामशास्त्रिकृता दूताङ्गदचन्द्रिका नाम संस्कृतव्याख्या सम्पूर्णा ।**

---

का कहा हुआ लेकर सुभट ने रस ( आनन्दरूप चमत्कार ) से पूर्ण यह नाटक बनाया ( अर्थात् सुभट के बनाये हुए इस रस-भरे नाटक में दूसरे कवियों का भी कुछ सङ्गृहीत है । ) उपजाति वृत्त है ॥ ५६ ॥

शुभ नाम बीस सौ छः संवत् की पौष पूर्णिमा तिथि को ।
दूताङ्गद की भाषा-टीका वेताल ने बनाई है ॥ १ ॥
दूताङ्गद नाटक पै प्रकाश देती हुई धरित्री में ।
शुभचन्द्रिका-सरीखी इसको सज्जन चकोर अपनावें ॥ २ ॥

**श्री अनन्तरामशास्त्री वेताल की बनाई दूताङ्गदचन्द्रिका नामक हिन्दी भाषा-टीका सम्पूर्ण हुई ।**

॥ श्रीः ॥

## संशोधनपत्रम् * ।

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|---|---|---|---|
| जगद्त्तार | जगद्रक्षण | ६ | ८ | (भो भो | भो भो | ३० | ८ |
| मिदंय विदानीं | मिदं यदिदानीं | ,, | १० | स्वं परि | (स्वं परि | ,, | ९ |
| प्रति । | प्रति | ८ | ३ | रामच न्द्रजी | रामचन्द्र जी | ,, | १८ |
| महंद्रुतं | महं द्रुतं | १३ | २ | वोरभा वको | वीरभाव को | ३४ | १६ |
| अज्ञानात् | “अज्ञानात् | १४ | ७ | रामस्य भावः | (रामस्य भावः।) | ३६ | १३ |
| छोड़ दो) | छोड़ दो । | ,, | २० | राक्षणों | राक्षसों | ४० | २४ |
| सीत्येवं | सीत्येव | १५ | ८ | प्रारब्धेस ति | प्रारब्धेसति | ४२ | २१ |
| जायेंगे । | जायँगे । ) | ,, | १६ | मुञ्च ।) | मुञ्च ।( | ४६ | १० |
| भवद्दृशाम् | भवद् दृशाम् | १६ | ४ | राक्षस । | राक्षस ! | ४७ | २७ |
| किञ्चि | किमपीति किञ्चि | २१ | १३ | शङ्करश्च कर्ते | शङ्करश्चकर्ते | ५० | ६ |
| अत्रतु | अत्र तु | २३ | ९ | छोड़ी | छोड़ी | ५६ | २२ |
| मन्त्री | मातामहो | २५ | ८ | अधःपतिः | अधःपातः | ६१ | १२ |
| अथवा | अथवा | २९ | ५ | शीलवत्वं | शीलवत्त्वं | ६३ | १९ |
| मेने ! | मेने । | २९ | ८ | | | | |

* मुद्रणदोषादत्र संस्करणे बहुत्राऽशुद्धपाठा दृश्यन्ते, तत्र च पाठकैः कृपयैतत्संशोधनपत्रसाहाय्येन शुद्धपाठाः सम्पादनीयाः ।

## पाठभेदाः * ।

| पूर्वमुद्रितपु.पाठाः | प्रकृतपु.पाठाः | पृ. | प. | पूर्वमुद्रितपु पाठाः | प्रकृतपु.पाठाः | पृ. | प. |
|---|---|---|---|---|---|---|---|
| अक्षता मा क्षता | अक्षता वा क्षता | १५ | ३ | मैथिली | मायामैथिली | ३५ | २ |
| लुठिष्यसि | लुठिष्यति | ,, | ,, | परायाङ्गना | पण्याङ्गना | ,, | ६ |
| तत्ते | धत्ते | १६ | ४ | भवती जानकी | भवति जानकी | ३८ | ४ |
| तमेवाद्यापि | तदेवाद्यापि | २० | ५ | वानरवाहिनीम् | वानरवाहिनी | ६० | ४ |
| प्रेक्षस्व प्रेक्षस्व | पश्य पश्य | ,, | ७ | हरिणो बाणः | हरिणैर्बाणैः | ६६ | ४ |
| विलसन्सरोष | विलसितसरोष | ,, | ८ | यः सर्वं | य शर्वं | ५७ | २ |
| रघुप्रभोर्देव ! | रघुप्रभवे देव ! | २१ | ५ | पार्वत्याः | पार्वत्या | ,, | ४ |
| शुश्रमः | शुश्रूम | २८ | ४ | किङ्करैरङ्कितस्य(?) | किङ्करैरङ्गदस्य | ६२ | ६ |

* ‘निर्णयसागर’मुद्रणालये मुद्रितचरस्यास्य पुस्तकस्य पाठाः संस्करणेऽस्मिन्नास्माभिः प्रदर्शिताः । ‘अशुद्धास्त’ इति बहुभिर्विचारैस्तत्र शुद्धपाठाः सन्निवेशिताः । ‘द्विविधा अपि पाठाः पाठकमहोदयैर्दृश्यन्ता’मिति तेऽत्र साम्प्रतं प्रदर्श्यन्ते ।

# पद्यानामनुक्रमणिका ।



